SATA SLOOKI

By. Shankaracharya

printed at . Mumbi

publishers: Atmarama Kanhobabikhy-na

Bombay - 1886

॥ श्री ॥

श्रीमच्छंकराचार्यप्रणीता

# शतश्लोकी

आनंदगिरिकृतटीकासंवलिता

गोरेइत्युपाह्वजनार्दनसूनुना शिवराम
शर्मणा यथामतिसंशोधिता;

साच

गुर्जरोपाह्वमहादेवसूनुनाजनार्दनशर्मणा

मुंबय्यां
गणपतकृष्णाजीमुद्रालयाधिपतिना 'आत्माराम कान्होबा
भिखयेन' मुद्रापयित्वा प्रकाशिता.

शकाब्दाः १८०८ । खिस्ताब्दाः १८८६

# प्रस्तावना.

अधुना खल्वतितरविस्तीर्णेस्मिन् भारते वर्षे उपलभ्यमानेष्वात्मानात्मविचारप्रतिपादकेषु वेदांतग्रंथेषु पूज्यपादश्रीमच्छंकराचार्यप्रणीताएव ग्रंथाबहवोमान्याश्च विजयंते, तेचाद्यत्वे प्रायेण बहुभिः सर्वेपि मुद्रणादिना प्रसिद्धिं प्रापिताः, परंचेयमुपनिषन्निबद्धपद्या शतश्लोकी तदंनर्गतापि नाद्यापि केनचित्प्रकाशितेति त्द्दि सखेदं कौतूहलं मन्वानेन मया केनचिद्दोषज्ञेन परिशोध्य प्रकाशिता. अस्यांच प्रतिपाद्यविषयक्षोदक्षमशब्दरचनासौष्ठवनैसर्गिकार्थगांभीर्यसततानुगमनशालिप्रौढतादयः आचार्याणां सहजागुणाः स्फुटतरमुद्रासंतइति कथनंतु पिष्टपेषणमेव; किंतु अस्याः प्रतिपद्यमंर्थतः आम्नायमूर्धवर्तिनीभिः श्रुतिभिर्निबद्धमितीयं नकस्यमुदमात्रहेतु ? अस्यांच भ्रमप्रमादयोः पुरुषधर्मत्वात् यत्किंचित्स्खलितं स्यात् तत्सारासारविचारकुशलास्तत्रभवंतः सुमनीषिणोनिर्मत्सराः सादरावलोकनेन समीकुर्वंत्वित्यलं विज्ञप्तिः

जनार्दनमहादेवगुर्जर
रामवाडी
मुंबई.

श्री

# श्रीशंकरानंदगुरवेनमः



श्रीमच्छंकराचार्यविरचिताशतश्लोकी

दृष्टांतोनैवदृष्टस्त्रिभुवनजठरेसद्गुरोर्ज्ञानदातुःस्पर्शश्चेत्तत्रकल्प्यःसनयतियदहोस्वर्णतामश्मसारम् ॥ नस्पर्शत्वंतथापिश्रितचरणयुगेसद्गुरुःस्वीयशिष्येस्वीयंसाम्यंविधत्तेभवतिनिरुपमस्तेनवालौकिकोपि ॥ १ ॥

ज्ञानंदातुः सद्गुरोः त्रिभुवनजठरे दृष्टांतोनैवदृष्टः । क्षुद्रविद्योपदेष्टॄणां गुरूणां दृष्टांतः कथंचिदुपलभ्येत परंतु "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते" इत्युक्तत्वाज्ज्ञानदातुः श्रीगुरोः दृष्टांतस्त्रिभुवनजठरान्तर्वर्तिषु देवादिलोकेषु नानाविचित्रवस्तुषु नैव दृष्टः । अथ मनाक् साम्यदर्शनेन स्पर्शनेन स्पर्शः पाषाणः दृष्टांतत्वेन कल्प्यः कल्पनीय-

श्चेत्तथापि न घटतइत्याह सनयतीति। स स्पर्शाश्मा अश्मसारं लोहं यद्यपि स्वर्णतां नयति प्रापयति, तथापि स्पर्शत्वं न प्रापयति स्वसदृशं न करोति। सद्गुरुस्तु श्रितचरणयुगे स्वीयशिष्ये स्वीयं साम्यं विधत्ते तेन कारणेन स्पर्शादेर्दृष्टांतानर्हत्वाद्गुरुर्निरुपमोदृष्टांतशून्यः। अथवा अलौकिकोपि प्रपंचातीतोपि न दृष्टः। आत्माकारत्वात् "ज्ञानीत्वात्मैव मे मतमिति" भगवद्वचनात् ॥ १ ॥ ॥

यद्वच्छ्रीखंडवृक्षप्रसृतपरिमलेनाभितोन्येपिवृक्षाःशश्वत्सौगंध्यभाजोप्यतनुतनुभृतांतापमुन्मूलयंति॥आचार्याल्लब्धबोधाअपिविधिवशतः सन्निधौसंस्थितानां त्रेधातापंचपापंसकरुणहृदयाःस्वोक्तिभिःक्षालयंति॥ २ ॥

अथ श्रीगुरुसन्निधानमात्रेणैव शिष्यः कृतार्थतामेति किंपुनरुपदेशादित्याह यद्वच्छ्रीखंडेति। श्रीखंडवृक्षोमुख्यश्चंदनवृक्षस्तस्मात्प्रसृतोयः परिमलस्तेनाभितः समंततः अन्येपि ये वृक्षास्ते शश्वन्निरंतरं सौगंध्यभाजोभवंति। अथ न केवलं सौगंध्यभाजः किंतु अतनुतनुभृतां बहू-

नां सर्वजातीयानां लोकानां तापं उन्मूलयंति। बहूनामिति तारतम्यवर्ज्यं। तद्वदाचार्यात् विधिवशात् भाग्यवशात् लब्धबोधाः संतः यदृच्छया सन्निधौ संस्थितानां सर्वजनानां सकरुणहृदयाः यथाधिकारं कर्मोपासनाज्ञानकांडनिरूपिकाभिः स्वोक्तिभिः त्रेधा आध्यात्मिकाधिभौतिकाधिदैविकभेदेन त्रिविधं तापं च कायिकवाचिकमानसिकभेदेन त्रिविधं पापं क्षालयंति उन्मूलयंति विधिवशादितिपदेन बोधलब्धेर्दुर्लभत्वं सूचितम् ॥ २ ॥

आत्मानात्मप्रतीतिःप्रथममभिहितासत्यमिथ्यात्वयोगाद्द्वेधाब्रह्मप्रतीतिर्निगमनिगदितास्वानुभूत्योपपत्त्या॥ आद्यादेहानुबंधाद्भवतितदपरासाचसर्वात्मकत्वादादौब्रह्माहमस्मीत्यनुभवउदितेखल्विदंब्रह्मपश्चात् ॥ ३ ॥

अथात्मप्रतीतिप्रकारमाह आत्मानात्मेति। प्रथमं मूलतः तत्त्वविचारे क्रियमाणे सत्यं मिथ्या चेति कोटिद्वयमेवासीत् तथा च सत्यमिथ्यात्वयोगादात्मानात्मप्रतीतिश्च "सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः" सत्यं ज्ञानं। मिथ्या त-

द्विपरीतमज्ञानं। एवं सत्यस्य ब्रह्मणः प्रतीतिर्द्वेधा निगमनिगदिता वेदोक्ता। अथ तामेवाह स्वेति। स्वानुभूत्या उपपत्त्या चैवं द्वेधा प्रतीतिः। तत्राद्या स्वानुभूत्या या प्रतीतिः सा देहानुबंधात् शरीरानुबंधेन भवति। तथोपपत्त्या या प्रतीतिः सा सर्वात्मकत्वात्समष्टिरूपात्। अथात्र हेतुमाह आदाविति। आदौ देहावच्छेदेन ब्रह्माहमस्मीत्यनुभवे उदिते सति पश्चात्तदनन्तरं सर्वंखल्विदंब्रह्मेत्युपपत्त्यात्मप्रतीतिर्भवति ॥ ३ ॥

आत्माचिद्वित्सुखात्मानुभवपरिचितःसर्वदेहादियंतासत्येवंमूढबुद्धिर्भजतिननुजनोनित्यदेहात्मबुद्धिम्॥ बाह्योस्थिस्नायुमज्जापलरुधिरवसाचर्ममेदोयुगंतर्विण्मूत्रश्लेष्मपूर्णस्वपरवपुरहोसंविदित्वापिभूयः॥ ४॥

एवमुद्देशमात्रेणात्मप्रतीतिमभिधायेदानीं विशेषतो निरूपयति आत्माचिद्विदिति।आत्मा चिद्वित्सुखात्मा वर्तते। चित् चैतन्यं वित् ज्ञानं सुखं परमानंदः तदेतत्त्रयमप्यात्मा स्वरूपं यस्य सतथा। न केवलं एवं विधात्मस्वरूपं उपनिषद्वाक्यैरेवज्ञातव्यमित्याह अनुभवेति। किंभूतः

आत्मा अनुभवपरिचितः अनुभवेन परिचितः निरंतराभ्यासेन ज्ञातः। अथ तमेवानुभवमाह सर्वदेहादियंतेति। सर्वे च ते देहादयश्च इंद्रियप्राणास्तेषां यंता चालकत्वेन देहादिनियंता चिद्रूपःइंद्रियनियंतृत्वेन संविद्रूपः सुषुप्तावानंदरूपइत्यवस्थात्रयेप्यनुभूयतइत्यर्थः । अहो इत्याश्चर्ये एवं सत्यपि मूढबुद्धिर्जनः अनित्यश्चासौ देहश्च तत्रात्मबुद्धिं देहएव आत्मेति मनुते । अथ देहोप्यात्मत्वकल्पनार्हो भविष्यतीतिचेन्नेत्याह बाह्यइति। देहबाह्यअस्थीनि च स्नायवश्च सूक्ष्मशरीरमज्जा च पलं मांसं रुधिरं रक्तं वसा चर्म मेदोयुक् अंतः विण्मूत्रश्लेष्मपूर्णं एवं विधं जुगुप्सास्पदं स्वपरवपुः स्वकीयं परकीयं वा शरीरं विदित्वापि भूयोभूयोदेहात्मबुद्धिं भजतइतिमहदाश्चर्यमित्यर्थः॥ ४॥

देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषहेतुर्ममेत्थंसर्वेस्वायुर्नयंतिप्रथितमलममीमांसमीमांसयेह॥एतेजीवंतियेनव्यवहृतिपटवोयेनसौभाग्यभाजस्तंप्राणाधीशमंतर्गतममृतममुंनैवमीमांसयंति ॥५॥

अथ पुनराश्चर्यमेव दर्शयन्नाह देहस्त्रीपुत्रेति। अमी सर्वे

लोकाः इहास्मिन् जगति इत्थं मांसमीमांसया मांसविचारेण अलं पूर्णं स्वायुर्नयंति स्वकीयमायुः परिकल्पयंति । किंभूतमायुः प्रथितं वंशविज्ञानादिगुणैः ख्यातमपीत्यर्थः । इत्थं कथमित्याह देहेत्यादि । देहः स्वदेहः, स्त्री, पुत्रः, मित्रं,अनुचरः सेवकः,हयः अश्वः,वृषः बलीवर्दः, एते मम तोषहेतवोभवंति इत्यभिमानेन। तथा एते पुष्टाः कृशावेति भरणपोषणरक्षणादिभिः दृढमोहानुबंधेन स्वायुर्नयंति देहभृतामिदमेव प्रयोजनमिति मत्वा व्यर्थं व्ययीकुर्वंति।अथ गूढमात्मतत्त्वं तैः परमप्रयोजनत्वेन कथं ज्ञेयं तत्र तेषां नापराधः किंतु तद्गतमौर्ख्यस्य । अथ तदेवाह एतइति । एते देहस्त्रीपुत्रादयः येन कृत्वा जीवंति तथा येन व्यवहृतिपटवः स्वस्वव्यवहारक्षमाः भवंति तथा येन सौभाग्यं सौंदर्यं भजंति मृतशरीरे तथात्वादर्शनादित्यर्थः। तं अंतर्गतं अंतर्यामित्वेन स्थितं प्राणाधीशं प्राणमुख्यं अमृतं म्रियमाणेषु देहेषु अमरणशीलं अमुं अनुभवैकवेद्यं नैव मीमांसयंति न विचारयंति इति महदाश्चर्यमित्यर्थः ॥ ५ ॥

कश्चित्कीटः कथंचित्पटुमतिरभितःकंटकानांकुटीरंकुर्वंस्तेनैवसाकंव्यवहृतिवि-

धयेचेष्टतेयावदायुः॥ तद्वज्जीवोपिनाना-
चरितसमुदितैःकर्मभिःस्थूलदेहंनिर्माया-
त्रैवतिष्ठन्ननुदिनममुनासाकमभ्येतिभू-
मौ ॥ ६ ॥

अथ देहात्मसाहचर्यं दृष्टांतेन द्रढयति कश्चिदिति।यथा कश्चित्पटुमतिः कीटः कथंचित् निजकफोद्भूतसूत्रप्रयत्नैः कंटकानां कुटीरं कुर्वन् व्यवहृतिविधये व्यवहारसिद्धये यावदायुश्चेष्टते इतस्ततः पर्यटति तद्वज्जीवोपि नानाचरितसमुदितैः अनेकविधानि चरितानि क्रियमाणसंचितानि तेभ्यः समुदितैः प्रारब्धकर्मभिः स्थूलदेहं शरीरं निर्माय विरचय्य ततः तत्रैव देहेतिष्ठन्नमुना देहेन साकं सहैव अनुदिनं भूमावभ्येति पर्यटति । अयमर्थः कंटककुटीरवदचेतनोदेहः स्वतोन चलति मृतशरीरे चलनादर्शनात् अतः तस्य कश्चिच्चालकोवक्तव्यः स एव जीवः तथा च रथाश्वन्यायवच्चालकव्यतिरेकेण देहो न चलति तथा देहव्यतिरेकेण तस्य चालकत्वं न युज्यते इत्युभयोः साहचर्यम् ॥ ६ ॥

स्वीकुर्वन्व्याघ्रवेषंस्वजठरभृतयेभीषय-

न्यश्चमुग्धान्मत्वाव्याघ्रोहमित्थंसनरप-
शुमुखान्बाधतेकिंनुसत्त्वान्॥ मत्वास्त्री-
वेषधारीह्यहमितिकुरुतेकिंनटोभर्तुरि-
च्छांतद्वच्छारीरआत्मापृथगनुभवतोदे-
हतोयःससाक्षी ॥ ७ ॥

अथ प्राप्तोपि देहः पारमार्थिकोन भवति किंतु अवि-
द्याकल्पितत्वात् कृत्रिमोस्ति इति तदनुरूपंन कार्यमिति
दृष्टांतेन द्रढयति स्वीकुर्वन्निति । यः कश्चित्पुरुषः स्वज-
ठरभृतये भिक्षया स्वोदरपूरणाय कृत्रिमव्याघ्रवेषं स्वी-
कुर्वन् तेन मुग्धान् बालिशांश्च भीषयंस्त्रासयन्नास्ते सः
अहं व्याघ्रः इत्थं मत्वा नरपशुमुखान्सत्त्वान् प्राणिनः
बाधते किंनु । व्याघ्रवेषं कृत्रिमं जानन् तूष्णीमास्ते व्या-
घ्रवेषानुरूपंकर्मकरोतीत्यर्थः । अथैतदेव पुनर्दृष्टांतेन प्र-
कटयति मत्वेति। स्त्रीवेषधारी नटः अहं स्त्रीति मत्वा भर्तु-
रिच्छां कुरुते किं स्त्रीवेषानुरूपैर्हावभावैरन्यान्पुरुषान्
प्रलोभयति परंतु स्वयं स्त्रीति मत्वा रमणयोगेच्छां न
करोति।तद्वच्छारीरः शरीरावच्छिन्नआत्मा देहतोदहानु-
भवेन पृथगस्ति यतः ससाक्षी तटस्थः । तेन देहानुरूपा
चेष्टा न कार्या स्वरूपानुरूपमेव स्थातव्यमित्यर्थः ॥७॥

स्वंबालंरोदमानंचिरतरसमयंशांतिमा-
नेतुमग्रेद्राक्षंखार्जूरमाम्रंसुकदलमथवा
योजयत्यंबिकास्य ॥ तद्वच्चेतोतिमूढंब-
हुजननभवान्मौढ्यसंस्कारयोगाद्बोधो-
पायैरनेकैरवशमुपनिषद्बोधयामासस-
म्यक् ॥ ८ ॥

अथ बहुप्रकारैरात्मप्रतीतिं दर्शयंत्याः श्रुतेः कौशलमाह स्वं बालमिति। अंबिका माता चिरतरसमयं रोदमानं स्वं बालं शांतिमानेतुं तूष्णींभावं प्रापयितुं अस्य बालकस्याग्रे द्राक्षं खार्जूरमाम्रं सुकदलं वा योजयति येनकेनाप्यभीष्टफलेनायं रोदनात् उपशमं प्राप्नोत्वित्यर्थः। तद्वद्बहुजननभवान्मौढ्यसंस्कारयोगादवशं चंचलं सदतिमूढमज्ञानोपहतं चेतः उपनिषत्सम्यग्यथाधिकारं अनेकैर्बोधोपायैरात्मज्ञानोपायैर्बोधयामास आत्मप्रतिपत्तौ बहुरूपायेषु प्रोक्तेषु सत्सु कोपि प्रतिफलिष्यतीत्यर्थः ॥ ८ ॥

यस्प्रीत्याप्रीतिपात्रंतनुयुवतितनूजार्थमु-
ख्यंसतस्मात्प्रेयानात्माथशोकास्पदमित-

रदतः प्रेयएतत्कथंस्यात् ॥ भार्याद्यं जीवितार्थी वितरति च वपुः स्वात्मनः श्रेयइच्छंस्तस्मादात्मानमेवप्रियमधिकमुपासीत विद्वान्नचान्यत् ॥ ९ ॥

अथात्मनः सर्वापेक्षया प्रियत्वमाह यत्प्रीत्येति । यस्माद्वक्ष्यमाणाद्विषयजातात्सकाशात्सआत्मा प्रेयान्परमप्रेमास्पदं भवति । सकः तनुयुवतितनूजार्थमुख्यं यद्विषयजातं तद्यत्प्रीत्या प्रीतिपात्रं भवति यस्य प्रीतिर्यत्प्रीतिस्तया सर्वं प्रीतिपात्रं । अत्रायमर्थः।सुखदुःखान्यतरसाक्षात्कारोभोगः सतु आत्मन्येव युज्यते अतोविषयभोगार्थं प्रवृत्तस्य प्रथममात्मप्रतीतिरुद्दिष्टा । तया मूलभूतया उक्तं विषयजातं प्रीतिपात्रं भवति । तत्रापि प्रथमं तनुः शरीरं भोगसाधनत्वात् । ततोभोगेष्वंतरंगा युवतिः। ततः उभयप्रीतिजन्यस्तनूजः पुत्रः । ततस्तन्निर्वाहकोर्थः द्रव्यं । ततोप्यर्थसाध्यमन्यदन्नपानवस्त्रतांबूलादिकं प्रीतिपात्रं भवति । तथा च मुख्याप्रीतिरात्मनः तदधीना गौणी प्रीतिरन्येषामिति प्रत्यक्षसिद्धमस्ति । एवं यस्य मुख्या प्रीतिः स एवात्माप्रेयानित्यर्थः । भवत्वात्माप्रेयांस्तथापि विषयजातमपि प्रीतिपात्रत्वादुपास्यमेवेत्याग-

तमित्याशंक्य विषयेषु प्रीतिपात्रत्वं प्रातिभासिकं तत्र पारमार्थिकं दुःखपात्रत्वमेवास्तीत्याह इतरदिति। इतरद्विषयजातं शोकास्पदमित्यनुभवसिद्धं आदिमध्यावसानेषुयद्दुःखं तत् दुःखास्पदमेव।उक्तं च "अर्जने रक्षणे नाशे क्लेशदोविषयोभवेत्।सुखार्थं सज्जते तत्र मूढधीरिति विस्मयः" इति एवं अन्वयव्यतिरेकाभ्यां दुःखास्पदमेतद्विषयजातं प्रेयः कथं स्यान्न स्यादेवेत्यर्थः । तस्मात्कारणाद्विद्वान् पंडितः अधिकं यथा भवति तथा प्रियं प्रियतममात्मानमेवोपासीत। न चान्यच्छरीराद्यं। अथात्मनः सर्वेभ्योधिकप्रियत्वं प्रकटयति भार्याद्यमिति।जीवितार्थी पुमान् भार्याद्यं वितरति पुत्रवित्ताद्यमपि दत्वा स्वात्मानं रक्षति। "आत्मानं सततं रक्षेद्दारैरपि धनैरपीत्युक्तत्वात्"। अथ शरीरेप्यात्मत्वनिषेधार्थमाह वपुरिति। आत्मनोजीवस्य श्रेयः सुकृतातिशयमिच्छन्वपुर्वितरति भृगुपातेन गंगाप्रवेशेन क्षात्रधर्मेण वा शरीरमर्पयति एवमात्यंतिकं प्रियत्वं आत्मनएव शरीरादीनामापेक्षिकमित्यर्थः ॥ ९ ॥

यस्माद्यावत्प्रियंस्यादिहहिविषयतस्ता-
वदस्मिन्प्रियत्वंयावद्दुःखंचयस्माद्भवति-

खलुततस्तावदेवाप्रियत्वम् ॥ नैकस्मि-
न्सर्वकालेस्त्युभयमपिकदाप्यप्रियोपि-
प्रियःस्यात्प्रेयानप्यप्रियोवासततमपिय-
तःप्रेयआत्माख्यवस्तु ॥ १० ॥

अथापेक्षिकं प्रियत्वं विविच्याह यस्मादिति । इह वि-षयभोगे यस्माद्भार्यादिविषयतः सकाशाद्यावत्सुखं भव-ति तावदेवास्मिन्विषये प्रियत्वं । तथा तस्माद्भार्यादिवि-षयतः यावद्दुःखं तावदेवास्मिन्नप्रियत्वं भवति । एवमु-भयमपि प्रियत्वं अप्रियत्वं वा एकस्मिन् विषये सर्वदा नास्ति यतः कदाचिदप्रियोपि कार्यवशात् प्रियः स्यात्। तथा कदाचित् प्रेयानपि भार्यादिविषयः निमित्तवशेन कालवशेन वा अप्रियः स्यात् । ततः आत्माख्यवस्तु सततमपि प्रेयः अत्र मूलं श्रुतिः "न वा अरे पुत्राणां कामाय पुत्राः प्रियाभवंत्यात्मनस्तु कामाय पुत्रा प्रियाभवंति" तथा "तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयो-न्यस्मात्सर्वस्मादंतरतरं यदयमात्मा सयोन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियꣳ रोत्स्यतीति । इश्वरोहं तथैवस्या-दात्मानमेवप्रियमुपासीत सयआत्मानमेवप्रियमुपास्ते न हास्य प्रियप्रमायुकं भवतीति भाष्यं"। "याज्ञवल्क्यो-

मैत्रेयीं प्रति वदति अरे मैत्रेयी पुत्राणां कामाय पुत्राः प्रिया न भवंति किंतु आत्मनस्तु कामाय पुत्राः प्रिया भवंति प्रथमतः स्वीयआत्मा प्रियः स्यात्तर्हि तदर्थं पुत्रा मृग्यंते यथा पुत्राय कदलीफलेन भाव्यमिति रथ्यां गतस्य मुख्या पुत्रप्रीतिरेवोद्दिष्टा तदर्थं फलादेः तद्वन्मुख्यात्मप्रीतिस्तदर्थं पुत्रादिप्रीतिः।एवमात्मप्रीतिशेषत्वेनैव सर्वेषां प्रीतिः। अथ तदेतदिति तत्र तत्र वित्तपुत्रयोरेषणा अतिप्रेयस्त्वेन दुस्त्यजा । अथ तदेतदात्माख्यं वस्तु पुत्रात्प्रेयः स्वभावतः पुत्रः प्रेयांस्तदपेक्षयाप्येतत्प्रेय इत्यर्थः। तथैव वित्तादपि प्रेयः। अथ किं प्रत्येकं वक्तव्यं अन्यस्मादपि सर्वस्मादपि प्रीतिपात्रात्प्रेयः। नहि केवलं वाङ्मात्रेणास्य प्रियत्वं। अतोयुक्तिमाह—अंतरतरमिति। यद्यस्मात्कारणात्सोयमात्मा अंतरतरः भवति अंतरतरमित्यांतरतरं पुत्रादि।ततोप्यांतरं युक्त्यंतरमाह—अन्यमिति। अथात्मनः सकाशादन्यात्प्रियतममिति ब्रुवाणं पुरुषं प्रति इति ब्रूयात् इतीति किं तवाभिमतं यत् पुत्रवित्तादि प्रियं तद्रोत्स्यति शोकास्पदं भवति उत्पत्तिस्थितिविनाशादिकालत्रयेपि दुःखहेतुत्वात्। एवं यस्माद्दुःखं भवति तत्कथं प्रियत्वेन गण्यते। तदुक्तं भगवता—"ये हि संस्पर्श-

जाभोगादुःखयोनयएवते। आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधइति"। तथा तथा विषयादुःखहेतवः। ह इतिकिमर्थं ईश्वरः किं तथैव स्यान्नैवेत्यर्थः। तस्मादात्मानमेवप्रियमुपासीत न पुत्रादि। एवं यआत्मानमेवोपास्ते अस्य ह इति निश्चयेन प्रियं पुत्रवित्तादिकं प्रमायुक्तं प्रमाविषयोन भवति न स्फुरति घृतास्वादे तैलभक्षणवदित्यर्थः। तदुक्तं भगवता—"यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततइति"॥ १०॥

**श्रेयःप्रेयश्चलोकेद्विविधमभिहितंकाम्यमात्यंतिकंचकाम्यंदुःखैकबीजंक्षणलवविरसंतच्चिकीर्षंतिमंदाः॥ ब्रह्मैवात्यंतिकंयन्निरतिशयसुखस्यास्पदंसंश्रयंतेतत्त्वज्ञास्तच्चकाठोपनिषदभिहितंषड्विधायांच वल्याम्॥ ११॥ ॥**

अथात्र कठशाखोपनिषदं संवादयति--श्रेयइति।लोके श्रेयः प्रेयश्च द्विविधमभिहितं प्रोक्तं। श्रेयः सुकृतसाधनं प्रेयः प्रेमास्पदं। तत् द्वेधा काम्यमात्यंतिकं च काम्यं श्रेयः फलोद्देशेन क्रियमाणमुपयाचिता-

दिकं च आत्यंतिकं मोक्षसाधनं। तथा प्रेयोपि काम्यं जायापुत्रादि आत्यंतिकं आत्माख्यं। तत्र श्रेयः प्रेयोवा यत्काम्यं तद्दुःखैकबीजं दुःखनिदानं तर्हि तत्र लोकानां प्रवृत्तिः कथं दृश्यतइत्यतआह क्षणलवविरसं शुक्तिकारजतवन्निमिषमात्रदृष्टिरम्यं तन्मंदाः मूर्खाश्चिकीर्षंति वांछंति। तथा आत्यंतिकं श्रेयः प्रेयोवा ब्रह्मैव यतोनिरतिशयसुखस्यास्पदं तत्त्वज्ञाः संश्रयंते इत्येतत्प्रमेयं कठवल्युपनिषदि अभिहितं। अथ कठोपनिषदः बहुधा पठिताः संति प्रकृते एतत्प्रमेयं कुत्रस्थले निरूपितमस्तीत्याह षड्विधायां च वल्याम्॥ ११॥

आत्मांभोधेस्तरंगोस्म्यहमितिगमनेभावयन्नासनस्थःसंवित्सूत्रानुविद्धोमणिरहमितिवाचेंद्रियार्थप्रतीतौ॥ दृष्टोस्म्यात्मावलोकादितिशयनविधौमग्नआनंदसिंधावंतर्निष्ठोमुमुक्षुःसखलुतनुभृतांयोनयत्येवमायुः॥ १२॥

अथ ब्रह्मैकत्वभावनया निष्पन्नस्यांतर्निष्ठस्य स्वरूपं

श्लोकद्वयेनाह–आत्मांभोधेरिति। एवं निरूपितप्रकारेण योमुमुक्षुरायुर्नयति परिकलयति सोंतर्निष्ठ इत्युच्यते। अथ किं कुर्वन्नायुः परिकलयतीत्याह-आत्मेति। गमने अहमात्मांभोधेस्तरंग इति भावयन् स्थानांतरचलने सति यथा तरंगोबाह्याभ्यंतरतो जलमय एव सन्नितश्चलति एवमहं जीवोप्यगाधस्याप्यात्मसमुद्रस्य तरंग इवास्मीति भावयन् गच्छतीत्यर्थः। "क्रीडन्नूर्मिरपामिवेतिश्रुतेः"। अथासनस्थो यथास्थितोमुमुक्षुः संवित्सूत्रानुविद्धोमणिरहमस्मीति भावयन् संविद्रूपं यत्सूत्रं तेनानुविद्धः प्रोतः अहं जीवलक्षणोमणिः अस्मीति भावयन्नास्ते "मयिसर्वमिदं प्रोतं सूत्रे मणिगणा इवेति" भगवद्वचनात्। एवं देहव्यापारेंतर्निष्ठत्वं दर्शयन् इदानीं इंद्रियव्यापारेंतर्निष्ठत्वं निरूपयति–दृष्टइति। इंद्रियार्थप्रतीतौ सत्यां आत्मावलोकादात्मदर्शनान्ममेदानीं आत्मदर्शनं वृत्तमिति मत्वा दृष्टोस्मीति भावयन् अथेंद्रियोपरमेप्याह - शयनविधाविति। शयनविधौ सुषुप्तिकालांते अहमानंदासिंधौ मग्नोभूवमिति भावयन्॥१२॥

वैराजव्यष्टिरूपंजगदखिलमिदंनामरूपात्मकंस्यादंतःस्थप्राणमुख्यात्प्रचलति

चपुनर्वेत्तिसर्वान्पदार्थान् ॥ नायंकर्तान भोक्तासवितृवदितियोज्ञानविज्ञानपूर्णः साक्षादित्थंविजानन्व्यवहरतिपरात्मानुसंधानपूर्वम् ॥ १३ ॥

अथ द्वितीयं श्लोकमाह—वैराजमिति । ज्ञानं शास्त्रोत्थं विज्ञानं अनुभवः ताभ्यां पूर्णोयः पुमान् भवति. स साक्षादित्थं इति विजानन् आत्मानुसंधानपूर्वं व्यवहरति । किमित्याशंक्याह—वैराजेति । अत्रैतदुक्तं भवति आत्माकारान्तःकरणवृत्तिः पुमान् यदा बाह्यदृष्टिर्भवति तदा नामरूपात्मकं अखिलं समग्रं विचित्रं जगत् स्थूलसमष्टिरूपस्यविराजोब्रह्मणोव्यष्टिरूपमिति पश्यन्कुत्सानिंदासूयाव्यतिरिक्तः सन् व्यवहरति तथा व्यष्टिरूपं जगत् अंतस्थप्राणमुख्याच्चिद्रूपात् प्रचलति व्यापारं करोति तथा तस्मादेव संविद्रूपात्पदार्थान्वेत्तीति विजानन् तदनुसंधानपूर्वकमेव व्यवहरति । तथायमात्मा सवितृवत् सूर्यवत् न कर्ता चालकत्वेपि कर्तृत्वाभिमानशून्यः तथा । न भोक्ता पदार्थग्राहकत्वेपि भोक्तृत्वाभिमानशून्यः । तद्वद्व्यवहरतीत्यर्थः ॥ १३ ॥

नैर्वेद्यंज्ञानगर्भंद्विविधमभिहितंतत्रवैरा-
ग्यमाद्यंप्रायोदुःखावलोकाद्भवतिगृह-
सुहृत्पुत्रवित्तैषणादेः ॥ अन्यज्ज्ञानोप-
देशाद्यदुदितविषयेवांतवद्धेयतास्यात्प्र-
व्रज्यापिद्विधास्यान्नियमितमनसांदेह-
तोगेहतश्च ॥ १४ ॥

अथ द्विप्रकारं वैराग्यमाह—नैर्वेद्यमिति । तत्र विज्ञानोपायं वैराग्यं द्विविधमभिहितं प्रोक्तं । अथ तस्य द्वैविध्यमाह—एकं नैर्वेद्यं अपरं ज्ञानगर्भं निर्वेदात् दुःखादुत्पन्नं नैर्वेद्यं तदेवाह आद्यं नैर्वेद्यं गृहात्सुहृत्पुत्रवित्तैषणादेः प्रायः दुःखावलोकाद्भवति । यत्तदग्रे दुःखजनकं भविष्यतीति वृश्चिकस्पर्शवत् दुःखदर्शनान्नाद्रियते आदृतमपि त्यज्यते ।अथ ज्ञानगर्भं वैराग्यमाह अन्यदिति ।अन्यत् द्वितीयं ज्ञानोपदेशाद्भवतीति। प्रथमं दुःखदर्शनादित्युक्तं अनंतरं आत्मातिरिक्तं सर्वदुःखरूपं इत्याद्युपदेशादुक्तविषये सुहृत्पुत्रकलत्रादिके वांतवद्धेयता स्यात् । यथा जुगुप्सा वांते जाते सति पुनस्तद्ग्रहणेच्छा न भवति तद्वत् विषयवैरस्यज्ञानात्पुनर्विवेकिनः तद्ग्रहणेच्छा नोत्पद्यते । तदुक्तं वासिष्ठे—"बु-

ध्वाप्यत्यंतवैरस्यं यः पदार्थेषुदुर्मतिः। बध्नाति वासनां भूयोनरोनासौ सगर्दभइति"। अथ प्रव्रज्यापि द्विविविधा भवति। प्रथमं गेहतः गृहात्प्रव्रज्या। अपरा देहतश्च देहाभिमानशून्यत्वमेव देहतः प्रव्रज्येत्यर्थः ॥ १४ ॥

यःकश्चित्सौख्यहेतोस्त्रिजगतियततेनैव
दुःखस्यहेतोर्देहेहंतातदुत्थास्वविषयम
मताचेतिदुःखास्पदेद्वे ॥ जानन्रोगाभि-
घाताद्यनुभवतियतोनित्यदेहात्मबुद्धि-
र्भार्यापुत्रार्थनाशेविपदमथपरामेतिना-
रातिनाशे ॥ १५ ॥

अथ द्विःप्रकारं वैराग्यं तत्र विज्ञानोपायवैराग्यमुपदेशप्रकारेणाह—यःकश्चिदिति । त्रिजगति लोकत्रयेपि यः कश्चित्पुरुषः सौख्यहेतोः सुखं भूयादिति यतते प्रयत्नं करोति परंतु दुःखस्य हेतोर्नैव यतते एवं सति या देहे अहंता तथा तदुत्था देहहितार्थमुत्पन्ना स्वविषयममता चेति द्वे दुःखास्पदे दुःखस्थाने भवतः। एवं जानन्नपि नित्यदेहात्मबुद्धिः पुरुषः रोगाभिघातादि अनुभवति। रोगोज्वरादिः अभिघातस्ताडणादिः एवं देहोहमिति बुध्या रोगाभिघातादि दुःखमनुभवति तथा

भार्यापुत्रादिषु ममताभिनिवेशे तन्नाशेन परामुत्कृष्टां विपदं एति प्राप्नोति परं त्वहंताममताशून्योदुःखी न भवति । यथा अरातेर्वैरिणोनाशे सति ममताशून्यत्वाद्दुःखी न भवति । तथा च यत्राहंता ममता वा तत्रैव दुःखसाहचर्यमिति धूमवह्निसाहचर्यवन्निश्चितमित्यर्थः ॥ १५ ॥

तिष्ठन्गेहेगृहेशोप्यतिथिरिवनिजंधाम गंतुंचिकीर्षुर्देहस्थंदुःखसौख्यंनभजतिसहसानिर्ममत्वाभिमानः ॥ आयात्रायास्यतीदंजलदपटलवद्यातयास्यत्यवश्यं देहाद्यंसर्वमेवप्रविदितविषयोयश्चतिष्ठत्ययत्नः ॥ १६ ॥

अथ गृहाद्बहिः प्रव्रजितुमशक्तस्य विवेकिनोपि पुरुषस्य मोक्षोपायमाह—तिष्ठन्निति । गृहेशोगृहस्थः गेहे तिष्ठन्नपि गेहस्थं दुःखसौख्यं न भजति न स्पृशति । कइव गृहे तिष्ठन्नतिथिरिव मार्गस्थइव। किंभूतोऽतिथिः निजं धाम गंतुं चिकीर्षुः स्वं ग्रामं गंतुमिच्छुः क्षणमपिवासस्थलं प्राप्तस्य अस्मात् श्वोप्यागंतव्यमस्तीति कृतनिश्चयस्य यथा निस्पृहत्वं तथैव प्रकृतेपीत्यर्थः-

किंभूतोगृहस्थः निर्ममत्वाभिमानः ममताभिमानशून्यः तर्हि स्थितेषु गतेषु वा विषयेषु कथमुदासीनइत्याह– आयातु आगमिष्यद्देहादि पदार्थजातमवश्यमायास्यत्येव। तथा यातु गमिष्यद्वस्तु यास्यत्येव । किंवत् जलदपटलवत् जलदपटलं स्वप्रयत्नेन नायाति विधिवशादायातमपि स्वप्रयत्नेन न निर्गच्छति एवं इत्थं प्रविदितविषयः प्रविदितः अन्वयव्यतिरेकेण ज्ञातः विषयोयेन स तथा भूतः पुरुषः अयत्नः सन् गृहे तिष्ठति ॥ १६ ॥

शक्त्यानिर्मोकतःस्वाद्बहिरहिरिवयःप्रव्रजन्स्वीयगेहाच्छायांमार्गद्रुमोत्थांपथिकइवमनाक्संश्रयेद्देहसंस्थाम् ॥ क्षुत्पर्यासंतरुभ्यःपतितफलमयंप्रार्थयेद्भैक्ष्यमन्नंस्वात्मारामंप्रवेष्टुंसखलुसुखमयंप्रव्रजेद्देहतोपि ॥ १७ ॥

अथ प्रागुक्तां द्विविधां प्रव्रज्यां पृथगनुवदति–शक्त्येति। यः पुरुषः शक्त्या वैराग्यबलेन स्वीयगेहात्सकाशात्सर्पो यथा बलेन निर्गच्छति कंचुकं त्यक्त्वा बहिर्याति तथा

पुत्रकलत्राद्यनादिस्नेहानुबंधेन दुस्त्यजादपि स्वगृहाद्बलेन प्रव्रजति। तथा यः देहसंस्थां जीवनोपायं मनाक् संश्रयेत् अनुष्ठानसिद्धिप्रयोजनमात्रमिति कृत्वा आहारादिकसंस्थां श्रयेत्। कइव मार्गद्रुमोत्थां छायां पथिकइव अग्रे गंतव्यमस्तीति द्रुमच्छायायां क्षणं विश्रमते नतु तत्रास्थां करोति। अथ देहधारणार्थं निर्वाहमाह—तरुभ्यइति। तरुभ्यः सकाशात्क्षुत्पर्याप्तं भैक्ष्यमन्नं प्रार्थयेत् न संग्रहबुध्या। किंभूतमन्नं पतितफलमयं वातादिना पतितानि यानि फलानि तन्मयं नतु फलच्छेदेन। अथ देहाभिमानमपि त्यजेदित्याह-सपुरुषः सुखमयं सुखस्वरूपं स्वात्मारामं प्रवेष्टुं देहतोपि प्रव्रजेत् देहाभिमानशून्यत्वमेव देहतः प्रव्रजनमित्यर्थः॥ १७॥

कामोबुद्धावुदेतिप्रथममिहमनस्युद्दिशा-
त्यर्थजातंतद्ग्रहातींद्रियास्यैस्तदनधिग-
मतःक्रोधआविर्भवेच्च॥ प्राप्तावर्थस्य
संरक्षणमतिरुदितोलोभएत्तत्त्रयंस्यात्स-
र्वेषांपातहेतुस्तदिहमतिमतात्याज्यम-
ध्यात्मयोगात्॥ १८॥

इदानीं कामक्रोधलोभाः सर्वेषां पातहेतवोभत्रं ती त्याह—कामइति । मूलभूतः कामोभिलाषः प्रथमं बुद्धावुदेति । ततोमनसि अर्थजातं पदार्थजातं रूपरसादि । तन्मध्ये अमुकेन भवितव्यमिति उद्दिशति संकल्पविषयं करोति । ततस्तत्पदार्थजातं इंद्रियास्यैश्चक्षुरादींद्रियमुखैर्गृह्णाति ग्रहीतुं यतते । एवं कृतेपि यत्ने तदनधिगमतः तेषां अनधिगमः अनेकांतरायैरप्राप्तिस्तदा क्रोधआविर्भवति । "कामात्क्रोधोभिजायतइतिभगवद्वचनात्" । अथ दैववशादर्थस्य प्राप्तौ नानोपायैस्तद्रक्षणार्थं या मतिः स्वीयत्वाभिमानः सएव लोभउदितः । एवमेतत्त्रयं कामक्रोधलोभरूपं सर्वेषां जीवानां पातहेतुः सकलदुःखरूपसंसारकारणमित्यर्थः । तस्मादेतन्मतिमता पुरुषेण त्याज्यं । कुतःअध्यात्मयोगात् बुद्धेः परतोवर्तमानं अध्यात्मं प्रत्यगात्मरूपं तस्य योगात् निरंतरानुसंधानरूपादध्यात्मयोगादित्यर्थः ॥ १८ ॥

दानंब्रह्मार्पणंयत्क्रियतइहनृभिःस्यात्क्षमाक्रोधसंज्ञाश्रद्धास्तिक्यंचसत्यंसदितिपरमतःसेतुसंज्ञंचतुष्कम् ॥ तत्स्या-

द्बंधायजंतोरितिचतुरइमान्दानपूर्वैश्च-
तुर्भिस्तीर्त्वाश्रेयोमृतंचश्रयतइहनरःस्व-
र्गतिंज्योतिराप्तिम् ॥ १९ ॥

एवं कामक्रोधादिदैत्यनिबर्हणेन देवत्वप्राप्तिरित्येत-स्मिन्नर्थे सामवेदोक्तं कल्माषसाम संवादयन्नाह—दानमिति । नृभिर्मनुष्यैर्यद्ब्रह्मार्पणं व्ययीक्रीयते तद्दानमिति प्रोक्तं । तथा या अक्रोधसंज्ञा सा क्षमा प्रोक्ता। तथा आस्तिक्यं अस्त्येवानेनप्रयोजनमिति विश्वासरूपिणी बुद्धिः श्रद्धेत्युच्यते । तथा सत्यं सदिति ब्रह्मेति चतुष्टयं मुक्तेः साधनं । अतः एभ्यः परभन्यद्विरुद्धस्वरूपं चतुष्कं सेतुसंज्ञं भवति । अदानं क्रोधः अश्रद्धा असत्यमिति यद्धेतुचतुष्टयं तज्जंतोः प्राणिनः बंधाय भवति । तस्मात्कारणादिमान् पूर्वोक्तान् चतुरः सेतून् दानपूर्वैश्चतुर्भिस्तीर्त्वा उल्लंघ्य नरः पुरुषार्थी श्रेयः अमृतं स्वर्गतिं ज्योतिराप्तिं च श्रयते प्राप्नोति । श्रेयः सुकृतातिशयं अमृतं देवत्वं स्वर्गतिं ऊर्ध्वगतिं ज्योतिराप्तिंच प्राप्नोतीत्यर्थः । अत्र श्रुतिः—“हाउ ३ सेतूंस्तरदुस्तरान् ३ दानेनादानंहाउ ३ अहमस्मिप्रथमजाऋतास्या ३ हाउ ३ सेतूंस्तरदुस्तरान् ३ अ-

क्रोधेनक्रोधंहाउ ३ पूर्वदेवेभ्योअमृतस्यनाभाइ ३ सेतूंस्तरदुस्तरान् हाउ ३ श्रद्धयाअश्रद्धांहाउ ३ यो माददातिसइदेवमावाहाहाउ ३ सेतूंस्तरदुस्तरान् ३ सत्येनानृतंहावु ३ अहमन्नमहमन्नमदंतमाद्मि ३ हाउ ३ वाएषागतिः एतदमृतंस्वर्गस्थज्योतिर्गच्छसेतुंस्तीर्त्वाचतुराह" भाष्यं—तत्र विकल्पे हाउ गद्यते। अदीर्घे दीर्घवत्कुर्यादित्यादि सामशिक्षोक्तमनुस्मरणीयं। तत्र चतुरः सेतून् तरेत्यन्वयः। सेतुर्यथा जलप्रवाहभेदकोभवति तथा अखंडैकरसभेदकाश्चत्वारः सेतवो भवंति तान् उत्तरोल्लंघयेत्युपदिशति। किंभूतान् सेतून् दुस्तरान् उपायांतरेणदुःखेन तर्तुमशक्यान्। अथ सेतून् तथा तदुल्लंघनोपायांश्च कथयति—दानेनेति। तत्र ब्रह्मार्पणेन यद्दीयते तद्दानम्। तदन्यद्देहभार्यापुत्राद्यर्थं यद्व्ययीक्रियते तत् अदानं। एवं दानशब्दे अदानमुल्लंघ्य देहाद्यर्थं व्ययीकृतमपि ब्रह्मार्पणमिति ज्ञात्वैव कुर्वित्यर्थः। तदुक्तंभगवता—"यत्करोषियदश्नासियज्जुहोषिददासियत्। यत्तपस्यसिकौन्तेयतत्कुरुष्वमदर्पणमिति"। अथ ज्ञानप्रकारमाह—अहमस्मीति। अहं ऋतस्य सत्यस्य

ब्रह्मणः प्रथमजोस्मि प्रथमंसर्वस्मात्प्राक् जात इति प्रथमजः शबलत्वेनोपस्थितः देहभार्यापुत्रकलत्रादिष्वंतर्गतोहिरण्यगर्भोहमस्मीति ब्रह्मार्पणमेव सर्वमिति भावयेदित्यर्थः।तथा हावु इत्यथवा अक्रोधेन क्षमारूपेण क्रोधं द्वितीयसेतुं तर।तत्रोपायमाह—पूर्वमिति।देवेभ्योमनश्चक्षुरादिभ्यः सकाशात्पूर्वं अमृतस्य ब्रह्मणो नाभिः बुद्धिरूपेण तारकोहमस्मि। बुद्धिपर्यंतमेव क्रोधस्ततोग्रे ब्रह्मैवास्मीति भावय।"योबुद्धेःपरतस्तुसइतिभगवदुक्तेः"। तथा श्रद्धया कृत्वा अश्रद्धां तृतीयं सेतुं तर । अस्येव परमात्मा नापरम् प्रयोजनमिति भावयन् तत्रोपायमाह—यइति । यः पुरुषः मा इति मह्यं ददाति सर्वं निवेदयति स इति सइ सएव देवं आवाः प्राप्तवानित्यास्तिक्यविश्वासादश्रद्धांतृतीयसेतुं तरेत्यर्थः । अथ सत्येन ब्रह्मणा अनृतं प्रातिभासिकं विश्वाकारं तर। तत्रोपायमाह—अहमिति। अहं जीवरूपेणान्नअद्मि।तथा प्रलये अन्नं अदंतं भक्षयंतं अग्न्याद्युपाधिभूतं सर्वं अग्न्याहुतिप्रक्षेपवज्जुहोमि "योवशिष्येतसोस्म्यहं" इति भावयेदित्यर्थः। एवमेषाउक्तप्रकारा गतिरुद्धारप्रकारः। तदुक्तं—प्रकारममृतं मोक्षः अनेनोपदेशेन स्वर्गच्छ तथा ज्योतिरमृतं गच्छेत्युपदेशः ॥ १९ ॥

अन्नंदेवातिथिभ्योर्पितममृतमिदंचान्यथामोघमन्नंयश्चात्मार्थंविधत्तेतदिहनिगदितंमृत्युरूपंहितस्य॥ लोकेसौकेवलाघोभवतितनुभृतांकेवलादीचयःस्यात्त्यक्ताप्राणाग्निहोत्रंविधिवदनुदिनंयोश्नुते सोपिमर्त्यः॥ २० ॥

अन्नमिति। अन्नं देवातिथिभ्योर्पितं अन्नं सदमृतं भवति देवेभ्योवैश्वदेवकर्मणि अतिथिभ्यश्च वैश्वदेवांते समागतेभ्यः अर्पितं यदन्नं तदमृतं भवति इत्यर्थः। अन्यथा एतदकरणे देवतातिथिवंचनेन मोघं निष्फलं अन्नं भवति। यश्च आत्मार्थं पिंडपोषणार्थं अन्नं विधत्ते तत्तस्य मृत्युरूपं परिणामे विषोपमं भवति असाक्षित्वात् एवं यः पुमान् केवलं अत्तीति केवलादी केवलाघो भवति केवलं अघरूपोभवतीत्यर्थः। अत्र श्रुतिः-"मोघमन्नंविंदतेअप्रचेताःसत्यंब्रवीमिवधइत्सतस्य। नार्यमणंपुष्यतिनोसखायंकेवलाघोभवतिकेवलादी"॥२०॥

लोकेभोजःसएवार्पयतिगृहगतायार्थिनेस्नंकृशाययस्तस्मैपूर्णमन्नंभवतिमख-

विधौजायतेजातशत्रुः ॥ सख्येनाऽन्नार्थिने योर्पयतिनससखासेवमानायनित्यंसंसक्तायान्नमस्माद्विमुखइवपरावृत्तिमिच्छेत्कदर्यात् ॥ २१ ॥

लोके भोजइति । लोके स एव भोजोदाता यः गृहागतायार्थिने अन्नं अर्पयति । किंभूताय कृशाय दरिद्रपीडिताय । अथ तस्य फलमाह—तस्मै दात्रे मखविधौ लौकिके अलौकिके वा यज्ञे अन्नं पूर्णं भवति । तथा अयं दाता अजातशत्रुर्भवति यस्मादन्नदानेन सर्वभूतांतरस्थाः सर्वेदेवाः संतृप्ताः भवंति अतो वैरिणोपि मित्राणि भवंतीत्यर्थः । अथ व्यतिरेकमप्याह—सख्यइति यः पुरुषः अन्नार्थिने सख्ये सखिभूताय स्वर्गप्रापकाय। नार्पयति स सखा न भवति । किंतु पिशुन एवेत्यर्थः । किंभूताय नित्यं सेवमानाय आश्रिताय।तथा संसक्ताय अनन्यशरणाय अनेन सर्वभूतेष्वपि अन्नदानं न करोतीत्युक्तं भवति । अथ याचकोपि अस्मात् कदर्यात् कृपणात् विमुख इव पराङ्मुखइव परावृत्तिं इच्छेत् पुनस्तं न याचयेत् अन्यं दातारं गच्छेदित्यर्थः । श्रुतिरपि—"स इद्भोजोयोगृहवेददात्यन्नकामायचरतेकृशाय । अरम

स्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥ न स सखा- योनददातिसख्ये सचाभुवे सचमानाय पित्वः । अपा- स्मात्प्रेयान्न तदोको अस्ति पृणंतमन्यमरणं चिदिच्छेत्" ॥

भाष्यं—अन्वयमुखेन प्रशंसति । सइत् सएव भोजो दाता। यः गृहवे प्रतिग्रहीत्रे तत्राप्यन्नकामाय चरते गृहमाग- ताय दरिद्रेण कृत्वा कृशाय एतादृशायातिथयेन्नं ददा- ति । यामहूतौ यामा गंतारो देवा आहूयंते ऽत्रेति यामहूति- र्यज्ञस्तस्मिन् तस्मै दात्रे फलं अरं अलं पर्याप्तं भवति कामप्रदं भवतीत्यर्थः । उतापि च अपरीषु अन्यासु शा- त्रवीसेनासु सखायं कृणुते तस्य सर्वे सखाय एव न शा- त्रव इत्यर्थः। अथ व्यतिरेकान्वयाभ्यामाह—सपुरुष स- खा न भवति यः सचाभूवे सर्वदा सहभवनशीलाय। तथा सचमानाय सेवमानाय उपसर्जनीभूताय सख्ये जनाय पित्वः पितून्नानि न ददाति न प्रयच्छति स सुहृन्न भव- तीत्यर्थः। अस्माददातुः सख्युः सः अपप्रेयात् अपग- च्छेत् । यद्येनं परित्यज्य गच्छेत्तदोकः सद्म नास्ति न भवति । अरण्यतुल्यं । सपुरुषः अन्यं पृणंतं अ- न्नदातारं अरणं शरणं गच्छेत् कामयेत् ॥ २१ ॥

स्वाज्ञानज्ञानहेतूजगदुदयलयौसर्वसा-
धारणौस्तोजीवेष्वास्वर्णगर्भंश्रुतयइति
जगुर्हूयतेस्वप्रबोधे ॥ विश्वंब्रह्मण्यबो-
धेजगतिपुनरिदंहूयतेब्रह्मयद्वच्छुक्तौरौ-
प्यंचरौप्येधिकरणमथवाहूयतेन्योन्य-
मोहात् ॥ २२ ॥

स्वाज्ञानज्ञानहेतूइति । जगदुदयलयौ स्वाज्ञानज्ञानहे-तू स्तः । जगतः नामरूपात्मकस्य चराचरस्योदयः प्रादुर्भावः लयश्च प्रलयः एतौ स्वस्याज्ञानं च ज्ञानं च स्वाज्ञानज्ञाने तएव हेतवः करणं ययोस्तौ । स्वशब्देनात्मा तथा च आत्माज्ञानाज्जगत्प्रादुर्भावः। तथा आत्मज्ञानाज्जगत्प्रलयइत्यर्थः । एतौ आस्वर्णगर्भं हिरण्यगर्भं मर्यादीकृत्य सर्वजीवेषु साधारणौ । हिरण्यगर्भोपि स्वस्वरूपं विस्मृत्याहमीश्वरोनिर्यंत-त्यभिमानं वहति तदा प्रादुर्भूतं विश्वाभासं पश्यति । अथ यदा ब्रह्माहमस्मीति स्वरूपे लीनोभवति तदा विश्वाभासविलयः इति श्रुतयो जगुः । एवमेव जी-वेष्वपि इति प्रकटयन्नाह—हूयतइति । स्वप्रबोधे ब्र-ह्माकारांतःकरणवृत्तौ जातायां विश्वं ब्रह्मणि हूय-

ते अग्नावाहुतिप्रक्षेपवत् भस्मसाक्रियते तदा देहाभिमानित्वाभावात् अबोधे देहाभिमानित्वात् अहमाकारा इदमाकारा वांतःकरणवृत्तिस्तदा इदं ब्रह्म जगति हूयते नास्त्येवेति क्रियते । तत्र दृष्टांतमाह—यद्वदिति । भ्रमनिवृत्तिकाले शुक्तौ रौप्यं हूयते। तथा प्रतिभासकाले तु अधिकरणं शुक्तिः रौप्ये हूयते कस्मादन्योन्यमोहात् शुक्त्यज्ञाने रजतोदयः रजताज्ञाने च शुक्तिरित्यर्थः ॥ २२ ॥

तुच्छत्वान्नासदासीद्गगनकुसुमवद्भेदकं नोसदासीत्किंत्वाभ्यामन्यदासीद्व्यवहृतिगतिसन्नासलोकस्तदानीम् ॥ किंत्वर्वागेवशुक्तौरजतवदपरोनोविराड्व्योमपूर्वःशर्मण्यात्मन्यथैतत्कुहकसलिलवत्किंभवेदावरीवः ॥ २३ ॥

ननु नामरूपात्मकस्य दृश्यमानस्य जगतः उपादानकारणं किं स्यादिति विचार्यमाणे न तावच्छुद्धस्यानीहस्य ब्रह्मणस्तथात्वमुपपद्यते अथ तदतिरिक्तस्य तथात्वकल्पने किमसद्वा सद्वा कल्पनीयं तत्राद्यं नि-

षेधति—तुच्छत्वादिति । तत्र तावज्जगदुपादानकारणं असन्नासीत् कुतः तस्यासतोगगनकुसुमवत्तुच्छत्वात् । अत्यंतासत्वेन उपादानकारणानर्हत्वात् । अथ नापि भेदकं सद्वाच्यं परमार्थतोब्रह्मणः सकाशात् अन्यस्य भेदजनकस्यासंभवात् । अतः परिशेषात् सदसद्विलक्षणमासीदित्याह—किंत्विति । आभ्यां सदसद्भ्यां अन्यत् विलक्षणं आसीदित्युक्तं भवति । ननु तर्हि ब्रह्मातिरिक्तंपरमार्थसन्मास्तु तथापि व्यवहारे सदासीदेवेति चेत्तदपि निषेधति—व्यवहृतीति । तदानीं व्यवहारस्याप्यभावादित्यर्थः । तदानीमिति पदेन सृष्टेः प्राङ्नासीत् किंतु परिशेषात् मध्ये एवोत्पन्नइत्युक्तं भवति । ननु तदानीमाकारवन्नास्ति तथापि व्योमासीत्तथा महाभूतारब्धोविराडप्यासीत् इति चेत् तदपि निषेधति—नोविराट् व्योमपूर्वइति।व्योमपूर्वं कारणीभूतंयस्य स तथा । अथास्तां मध्य एवोत्पन्नं तस्य पृथग्भूतत्वेन ब्रह्मणआवरकत्वं भवेत्तदपि दृष्टांतेन निषेधति—शर्मणीति । शर्मणि शुद्धे ब्रह्मणि तत्किमावरीवः आवृणोतीत्यावरीवः आवरकं न भवेदित्यर्थः । किंवत् कुहकसलिलवत् माययास्थले जलभ्रममुत्पादयतः कुहकस्यैंद्रजालिकस्य क्षणमुत्पन्नं स-

लिलं भ्रमनिवृत्तौ सत्यां किं स्थलस्यावरणं भवे-
त् नैव । तद्वत् प्रकृतेपीत्यर्थः ॥ २३ ॥

बंधोजन्मात्ययात्मायदिनपुनरभूत्तर्हि
मोक्षोपिनासीद्यद्वद्रात्रिर्दिनंवानभवति
तरणौकिंतुदृग्दोषएषः॥ अप्राणंशूद्धमे-
कंसमभवदथतन्माययाकर्तृसंज्ञंतस्मा-
दन्यच्चनासीत्परिवृतमजयाजीवभूतंतदे-
व॥ २४॥

अथ वस्तुतोब्रह्मरूपाणामेव जीवानां बंधमोक्षावप्य
ज्ञानकृतावित्याह – बंधइति । पुनर्जन्मात्ययात्मा
जन्ममृत्युरूपोयदिबंधोनाभूत् तर्हि मोक्षोपि नासीत्।
तदुक्तम् – "बद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतः" ।
तथाद्वितीयस्याभावात्कोबद्धः कश्च मुच्यत इति । अ-
त्रदृष्टांतमाह–यद्वदिति । तरणौ सूर्येरात्रिर्दिनं वा न भ-
वति न युज्यते । कथं तर्हि रात्रिदिनव्यवहारो भवती-
त्याह –एषदृग्दोषः जगच्चक्षुषां सूर्यादर्शनदर्शनमेव
रात्रिदिनव्यवहारनिमित्तमापेक्षिकमित्यर्थः । अथ जी-
वत्वोपाधिनिमित्तमाह–अप्राणमिति । अप्राणोह्यम

नाः शुभ्रइति । शुद्धस्य ब्रह्मणः प्राणसंबंधाभावाद-प्राणं एकमद्वितीयं तन्मायया कर्तृसंज्ञं हिरण्यगर्भाख्यमभवत् । तस्मादन्यंनासीत् । तदेवाजया मायया परिवृतं सज्जीवभूतं जीवत्वं प्राप्तं न पृथक्कश्चिज्जीवोस्तीत्यर्थः । अत्र श्रुतिः–"नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत् । किमावरीवः कुहकस्यशर्मन्नभः किमासीद्गहनंगभीरम्"॥२४॥

**प्रागासीद्भावरूपंतमइतितमसागुढमस्मादतर्क्यंक्षीरांतर्यद्वदंभोजनिरिहजगतोनामरूपात्मकस्य॥कामाद्धातुःसिसृक्षोरनुगतजगतःकर्मभिःसंप्रवृत्ताद्रेतोरूपैर्मनोभिःप्रथममनुगतैःसंततैःकार्यमाणैः ॥ २५ ॥**

अथ पूर्वमुक्तं तदानीं जगन्नासीदिति तर्हि पुनः कथमुत्पन्नमित्याशंक्याह–प्रागासीदिति । जगदुपादानभूतं भावरूपं तमइत्यज्ञानं आसीत् । तेन तमसा जगद्गूढमाच्छादितमस्मात्कारणादतर्क्यं अज्ञायमानं किंवत् यद्वत्क्षीरांतर्गतमंभः उदकं क्षीरांतर्वर्त-

मानमपि न ज्ञायते तद्वत् । ततइह अस्मिन्नाज्ञाने अस्य नामरूपात्मकस्य जगतः जनिः उत्पत्तिः । ननु यद्यपि बीजांतर्गतोवृक्षस्तिष्ठति तथापि कारणसामग्रीव्यतिरेकेण नोत्पद्यते । अतआह—कामादिति । सिसृक्षोः स्रष्टुमिच्छतो धातुः परमेश्वरस्य कामादिच्छातः । सापि कुत इत्यतआह—किंभूताद्धातुः कामात् अनुगतजगतः कर्मभिः संप्रवृत्तात् अनुगतं अनादित्वेन वर्तमानं यज्जगत् तस्य कर्मभिः प्रेरितात् । अथ तान्यपि कुतइत्याह—रेतोरूपैर्बीजभूतैर्मनोभिः प्रथमं अनादिप्रवाहेणानुगतैः सद्भिः संततैः कार्यमाणैः निष्पादितैः कर्मभिरित्यर्थः एतदर्थे श्रुतिरपि—“तमआसीत्तमसागूळ्हमग्रेप्रकेतंसलिलंसर्वमाइदम् । तुच्छेनाभ्वपिहितंयदासीत्तपसस्तन्महिनाजायतैकम् ॥ कामस्तदग्रेसमवर्तताधिमनसोरेतःप्रथमंयदासीत् । सतोबंधुमसतिनिरविंदन्हृदिप्रतीष्याकवयोमनीषा” ॥ भाष्यं—ननूक्तप्रकारेण यदि पूर्वमिदं जगत् नासीत् कथं तर्हि तस्य जंन्म जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावांतरविशेष इति कारकस्य सतोनियतपूर्वक्षणवर्तित्वस्यावश्यंभावित्वात् । अथैतद्दोषपरिजिहीर्षया

जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते । कथं तस्य जन्म अतआह—तमसागूढमग्रइति । अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूढं । यथा नैशं तमः सर्वं पदार्थजातमावृणोति तद्वदात्मतत्त्वस्यावरकत्वान्मायापरपर्यायं भावरूपाज्ञानं अत्र तमइत्युच्यते । तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति । आच्छादकात्तस्मात्तमसोनामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते । ननु कारणभूते तमसि तज्जगदात्मकं कार्यं विद्यते चेत्तर्हि कथं नासीद्रजइत्यादिना तन्निषेधस्तत्राह—तमआसीदिति । तमोभावरूपाज्ञानमूलकारणं तद्रूपतां तदात्मतां । यतः सर्वं जगत् प्राप्तमासीदतोनिषिध्यत इत्यर्थः । ननुआवरकत्वादावरणं तमः कर्तृआवार्यं जगत्कर्म कथं कर्तृकर्मणोस्तादात्म्यं तदाह—अप्रकेतमिति । अप्रकेतमप्रज्ञायमानं । अयमर्थः—यद्यपि जगतः तमसः कर्मकर्तृभावोयौक्तिकोवर्तते तथापि व्यवहारदशायामिव सस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायते इति तादात्म्यवर्णनं । अतएव मनुना स्मर्यते—"आसीदिदंतमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं-

प्रसुप्तमिवसर्वतः॥ कुतोवा न प्रज्ञायतइत्यतआह—सलिलमिति । लुप्तोपमा सलिलमिव यथा क्षीरेण विभागापन्नं नीरं दुर्विज्ञानं तथा तमसा अविभागापन्नं जगत् । ननु विविधविचित्रभूयसः प्रपंचस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवाभिभवः तथा तमोपि क्षीरवद्बलवदित्येवोच्यते तर्हिदुर्बलस्य जगतः सर्गसमये नोद्भवसंभव इत्यत आह—तुच्छेनेति । आसमंताद्भवतीत्याभुः तुच्छेन तुच्छकल्पेन सदसद्विलक्षणेन भावरूपाज्ञानेनापिहितं आच्छादितमासीत्। एंकं एकीभूतं कारणेन तमसा अविभागतां प्राप्तमपितत्कार्यजातं तमसः पर्यालोचनरूपत्वं चान्यत्राम्नायते—"यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपइति" ।अथ कामस्तदग्र इति । ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगतः पुनःपुनरुत्पत्तौ कारणं तदेव वा किंनिबंधनमित्यत आह--कामस्तदग्रइति । अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत सिसृक्षा जायतेतिभावः । ईश्वरस्य सिसृक्षा वा किंहेतुकेत्यत आह—मनसइति । मनसोंतःकरणस्य संबंधी-

वासनाशेषेण मायायां विलीनेंतःकरणे समवेतं । सामान्यापेक्षमेकवचनं सर्वप्राण्यंतःकरणेषु समवेतमित्यर्थः । एतेनात्मनोगुणाधारत्वं प्रत्याख्यातं । तादृशं रेतः भाविनः प्रपंचस्य बीजभूतं प्रथमं अतीते कल्पे प्राणिभिः कृतं पुण्यात्मकं कर्म यत् यतः कारणात् सृष्टिसमये आसीत् अभवत् । भूष्णुवर्धिष्णु अजायत परिपक्कं सत्फलोन्मुखमासीदित्यर्थः। तत् ततोहेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थः । तस्यां च जातायां स्रष्टव्यं पर्यालोच्यते । अतः सर्वं जगत्सृजति तथा चाम्नायते —"सोकामयत । बहुस्यांप्रजायेयेति । सतपोतप्यत।सतपस्तप्त्वा । इदंसर्वमसृजत । यदिदंकिंचेति"। अथोविद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति । सतइति । सतः सत्त्वेनेदानीमनुभूयमानस्य सर्वस्य जगतोबंधु बंधकत्वे हेतुभूतं कल्पांतरे प्राण्यनुष्ठितं कर्मसमूहंकवयः क्रांतदर्शिनः योगिनः हृदि हृदये निरुद्धया मनीषया बुध्या प्रतीक्ष्य विचार्य असति सद्विलक्षणे अव्याकृते कारणे निरविंदन् निकृष्यालभंत विविच्याजानन्नित्यर्थः॥ २५॥

चत्वारोस्याःकपर्दायुवतिरथभवेन्नूतना नित्यमेषामायावापेशलास्यादघटनघटनापाटवंयातियस्मात् ॥ स्यादारंभेघृतास्याश्रुतिभववयुनान्येवमाच्छादयंतीतस्यामेतौसुपर्णाविवपरपुरुषौतिष्ठतोर्थप्रतीत्या ॥ २६ ॥

मायायाउत्कर्षं वर्णयति—चत्वारइति । अस्याः पूर्वोक्तमायायाः चत्वारः कपर्दाः उत्कर्षाः संति । अथ तानेवाह—युवतिरिति । एषा माया नित्यं नूतना कदापि स्थविरा न भवति अतोयुवतिर्भवेत् देहादिवार्धकेपि सा तरुण्येवास्ति अयमेकउत्कर्षः । तथा इयं पेशला स्यात् किन्नाम पेशलत्वं अत्राह--पेशला• कुशलेत्यर्थः । तदेवाह यस्मादिति—यस्मात्कारणादियं अघटनघटनापाटवं विक्षेपे कौशलं याति अयं द्वितीयउत्कर्षः । तथेयमारंभे उपक्रमे घृतास्या घृतवन्मृष्टं आस्यं मुखं यस्याः सा तथा यस्य कस्याप्यारंभे मृष्टं दर्शयति परिणामे विषोपममित्यर्थः अयं तृतीयउत्कर्षः । अथेयं श्रुतिभवयुनानि श्रुतिभिः उपनिषद्भागैः प्रतिपादितानि आ-

त्मज्ञानानि आवरणशक्त्या आच्छादयन्ती अयं चतुर्थ उत्कर्षः। तस्यां चतुरुत्कर्षवत्यां मायायां एतौ परपुरुषौ परः परमात्मा पुरुषो जीवः एतौ सुपर्णौ पक्षिणाविव तिष्ठतः केन प्रकारेण ज्ञातावित्यतआह—अर्थेति। अर्थप्रतीत्या पदार्थभासकत्वेन माया तिरोधानकर्त्री सकलभासकत्वं परमात्मन एवेत्यर्थः॥ २६॥

एकस्तत्रास्त्यसंगस्तदनुतदपरोज्ञानसिं-
धुंप्रविष्टोविस्मृत्यात्मस्वरूपंसविविधज-
गदाकारमाभासमैक्षत्॥ बुद्ध्यांतर्या-
वदैक्षंविसृजतितमजासोपितामेवमेक-
स्तावद्विप्रास्तमेकंकथमपिबहुधाकल्प-
यंतिस्ववाग्भिः॥ २७॥

इदानीं जीवपरमात्मनोः परमार्थतः एकत्वमाह—एकइति। तत्र तयोः सुपर्णयोर्मध्ये एकः परमात्मा असंगोस्ति तदनु तदपरोजीवः अज्ञानसिंधुं प्रविष्टः सच आत्मस्वरूपं विस्मृत्य विविधजगदाकारं आभासं प्रातिभासिकं ऐक्षत् दृष्टवान् ततः बुद्ध्या निश्चयात्मिकया अंतः यावदैक्षत्तावत् अजा माया तं जीवं विसृजति तथा सोपि जीवः तां मायां विसृजति।

अंतर्दृष्ट्या विचार्यमाणे उभयोरसंस्पर्शेऽखंडत्वमेवानुभूयते। तर्हि सुपर्णद्वयकल्पना कुत इत्यत आह—विप्रा इति तमेकमेवात्मानं विप्राः श्रुतिज्ञाः कवयः शिष्यबोधादि व्यवहृतिविधये वाग्भिः अनेकधा कल्पयंति नत्वनुभवतइत्यर्थः। एतदर्थे श्रुतिः—"चतुष्कपर्दायुवतिः सुपेशाघृतप्रतीकावयुनानिवस्ते। तस्यांसुपर्णावृषणा निषेदतुर्यत्रदेवादधिरेभागधेयं॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टेइति"॥ २७॥

**नायातिप्रत्यगात्माप्रजननसमयेनैवयात्यंतकालेयत्सोखंडोस्तिलैंगंमनइहविशतिप्रव्रजत्यूर्ध्वमर्वाक्॥ तत्कार्स्यंस्थूलतांवानभजतिवपुषःकिंतुसंस्कारजातंतेजोमात्रागृहीत्वाव्रजतिपुनरिहायातितैस्तैःसहैव॥ २८॥**

अथ जन्ममरणानुबंधेनास्य स्वरूपत्वं वर्णयति—नेतिः प्रजननसमये गर्भाविर्भावे सति प्रत्यगात्मा नायाति गर्भे न प्रविशति। अथांतकाले देहावसानसमये नायाति नागच्छति। यद्यतः आत्मा अखंडः अपरिच्छिन्नोस्ति यतः प्रवेशनिर्गमौ हि परिच्छिन्न-

स्यैव भवतः । तर्हि लोके जन्ममरणादिव्यवहारः कस्येत्याह—लैंगमिति । लैंगं पंचदशकलोपेतं मनः इह लोके ऊर्ध्वं देवलोके अर्वाक् मनुष्यलोके वा गर्भे विशति तथा प्रव्रजति च न प्रत्यगात्मा। अथ तल्लिंगदेहोपेतं मनः वपुषः स्थूलदेहस्य कार्श्यं कृशतां स्थूलतां पुष्टत्वं वा न भजति रोगाद्युपहतौ कृशता तथा पाटवे पुष्टत्वं वा न भजति । एवं तन्मनः वपुषः उत्क्रांतौ पूर्वसंस्कारजाते तथा तेजोमात्राः प्रत्यक् इन्द्रियैः सह प्राणान् गृहीत्वा व्रजति गच्छति । तथा पुनरुत्पत्तिसमये तैस्तैः संस्कारजातैः सह इह गर्भे आयाति ॥ २८ ॥

आसीत्पूर्वंसुबंधुर्भूशमवनिसुरोयःपुरोधाःसनातेर्ब्राह्म्यात्कूटाभिचारात्सखलुमृतिमितस्तन्मनोगात्कृतांतम्॥तद्भ्राता श्रौतमंत्रैःपुनरनयदितिऽप्राहसूक्तेनवेदस्तस्मादात्माभियुक्तंव्रजतिननुमनःकर्हिचिन्नांतरात्मा ॥ २९ ॥

अथ प्रवेशनिर्गमौ मनसएवसंभवतोनात्मनइत्यत्र ऋकूशाखीयांश्रुतिमाख्यायिकापूर्विकां संवादयति—आ-

सीदिति। सुबंधुनामा अवनिसुरोब्राह्मणः पूर्वं भृशमत्यर्थं सर्वोत्कर्षेणासीत्। किंभूतः सनातेः पृथ्वीभुजः पुरोधाः पुरोहितः। अथ खल्विति श्रूयते स ब्राह्म्यात् ब्रह्मकृतात्कूटाभिचारात्कापट्येन रचितादभिचारादस्त्रप्रयोगान्मृतिमितः मरणंप्राप्तः तन्मनः कृतांतं यमलोकमगात् अथ तस्य सुबंधोः भ्राता श्रौतमंत्रैः कृत्वा तद्गतं मनः पुनरनयत् आनीतवान् इति सूक्तेन वेदः प्राह। तस्मात्कारणादात्माभियुक्तं आत्म प्रतिबिंबाभियुक्तं सत् मन एव व्रजति परंत्वंतरात्मा न व्रजति। एतन्मूलभूताश्रुतिरपि अष्टमाष्टके—"यत्ते यमंवैवस्वतंमनोजगामदूरकं। तत आवर्तयामसीहक्षयायजीवसे"॥ भाष्यं—अत्रे यमाख्यायिका पूर्वं सनातिसंज्ञस्य राज्ञोगृहे बंधुः सुबधुंः श्रुतबंधुर्विप्रबधुरिति चत्वारोभ्रातरः पुरोहिताआसन्। ते द्विषन्नाशाय राज्ञादिष्टाउपायं चक्रुः अभिचारिकं न कुर्वंतीति राज्ञा बहिष्कृताः। ततोन्यन्मायावि पुरोहितद्वयं कृतं। तेन बंध्वादयश्चत्वारः क्षुब्धाः संतोराज्ञअभिचारिकं कर्तुं प्रवृत्ताः तच्छ्रुत्वा मायाविनौ पुरोहितौ च आभिचारिककर्मणा सुबंधुं जघ्नतुः ततः सुबंधोर्भ्रातरः तं पुनर्जीवितुं वक्ष्यमाणैः श्रौतमंत्रैः उपायं चक्रुः। "यत्तेयममिति"।

भो सुबंधो यत्ते मनः वैवस्वतं विवस्वतः सूर्यस्य पुत्रं यमं प्रति दूरं जगाम तत्ते मनः आवर्तयामसि ततोपि निवर्तयामः किमर्थं इह लोके क्षयाय निवासाय जीवसे जीवनायेति प्रथमा । अथ द्वितीया—"यत्तेदिवंयत्पृथिवींमनोजगामदूरकं । ततआवर्तयामसीहक्षयायजीवसे" तथा—"यमादहं वैवस्वतात्सुबंधोर्मनआभरं । जीवातवेनमृत्यवेथोअरिष्टतातये" ॥ २९ ॥

**एकोनिष्कंपआत्माप्रचलतिमनसाधावमानेनतस्मिंस्तिष्ठन्नग्रेथपश्चान्नहितमनुगतंजानतेचक्षुराद्याः॥ यद्वत्पाथस्तरंगैःप्रचलतिपरितोधावमानैस्तदंतः प्राक्पश्चादस्तितेषांपवनसमुदितैस्तैःप्रशांतैर्यथावत् ॥ ३० ॥**

इदानीं चलनादिधर्माः मनसएव नात्मनइति दर्शयति—एकइति । एकोद्वयोनिष्कंपः कर्मशून्योपि आत्मा धावमानेन मनसा सह प्रचलति तथा तस्मिन्मनसि अपि तिष्ठन् अग्रे पुरतः पश्चाच्च वर्तते । तमेवंविधमात्मानं अनुगतं अंतर्गतं अपि च-

क्षुराद्याः न जानते न जानंति इंद्रियागोचरत्वात् । तत्रदृष्टांतमाह—यद्वदिति । यद्वत्पाथः उदकं परितोधावमानैः तरंगैः प्रचलति तथा तेषां तरंगाणां अंतः प्राक् पश्चात् च पाथोस्ति । किंभूतैः तरंगैः पवनसमुदितैः वायुनोत्पन्नैः एवं मायामयैरिंद्रियैरप्यात्मा । अथ तैः प्रशांतैः सद्भिर्यथावत् प्रकृतिस्थं पाथएवास्ति तद्वदात्मापि ॥ ३० ॥

**एकाक्यासीत्सपूर्वंमृगयतिविषयानानुपूर्व्यांतरात्माजायामेस्यात्प्रजावाधनमुपकरणंकर्मकुर्वंस्तदर्थम् ॥ क्लेशैःप्राणावशेषैर्महदपिमनुतेनान्यदस्माद्गरीयस्त्वेकालाभेप्यकृत्स्नोमृतइवविरमत्येकहान्याकृतार्थः ॥ ३१ ॥**

इदानीं जीवस्य बाह्यप्रपंचानुवृत्तिं निरूपयति—एकाकीति । सोंतरात्मापूर्वं एकाकी आसीत् । अतः परं आनुपूर्व्या अनुक्रमेण विषयान्मृगयति गवेषयति । अथानुपूर्वीमाह—प्रथमं जाया मे स्यात्ततः प्रजा मे स्यात् ततस्तन्निर्वाहार्थं धनं वित्तं मे स्यात् । अथ तदर्थं वित्तप्राप्त्यर्थं प्राणावशेषैः क्लेशैः

कर्म कुर्वन् एवं धनादिविषयप्राप्तौ अस्माद्विषयाद-न्यत् महत् अपि गरीयः श्रेष्ठं न मनुते । एवं बहुविषयोद्देशे एकविषयालाभेसति अकृत्स्नोभूत्वा मृतइव विरमति विरामं प्राप्नोति तथा एकहान्या प्राप्तस्य नाशेन अकृतार्थोभवति । अत्र मूलं श्रुतिः—"आत्मैवेदमग्रआसीत् एकएवसोकामयत जायामेस्यादथप्रजायेयाथ वित्तंमेस्यादथकर्म कुर्वीयेत्येतावान्वैकामोनेत्सच्चनातोभूयोविंदेततस्मादप्येतर्ह्ये-काकीकामयतेजायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीयेतिसयावदप्येतेषामेकैकंनप्राप्नोत्यकृत्स्नइवतावन्मन्यतेतस्या कृत्स्नता"॥भाष्यं-अग्रे पूर्वं इदमयं एकएव केवलमात्मैवासीत् । सजायां मे स्यादित्यकामयत ऐच्छत् । ततोस्यांजायायां प्रजायेय पुत्रत्वेन जन्म प्राप्नुयामित्यकामयत । "अस्यांजायतेपुनरितिश्रुतेः"। तथा आत्मैव जायापुत्रत्वेन परिणमति। तथा यत्कर्म करोति तदप्यात्मार्थमेवेति पुनः श्रुत्या निरूप्यते । एवं जायापुत्रप्राप्तौ तद्भरणार्थं वित्तं मे स्यादिति वित्तं कामयते । अथ वित्तप्राप्त्यर्थं कर्म कुर्वीयेति । एतावान्वै कामः । अथ नेदिति निपातोनिषेधार्थे नेत्सच न संभवतीत्यर्थः । अयः

जायापुत्रादिविषयादन्यद्भूयः बहुतरं नविंदेत न विंदति। एवं यावज्जीवं पुनरुत्पत्तिमासाद्य तथैवेति पुनरुक्तं। एवं सजीवः यावदेतेषां जायादीनां मध्ये एकैकं न प्राप्नोति तावदकृत्स्नः असंपूर्णोहमिति मन्यते। इत्येवं तस्याकृत्स्नता अपूर्णता ॥ ३१ ॥

नासीत्पूर्वंनपश्चादतनुदिनकराच्छाद-
कोवारिवाहोदृश्यःकिंत्वंतरासौस्थगय-
तिसदृशंपश्यतोनार्कबिंबम्॥नोचेदेवं
विनार्कंजलधरपटलंभासतेतर्हिकस्मा-
त्तद्वद्विश्वंपिधत्तेदृशमथनपरंभासकं
चालकंस्वम्॥३२॥

अविद्याया आवरणशक्तिमेव विविच्यप्रपंचयति-नासीदिति। वारिवहतीति वारिवाहः मेघः अतनुदिनकराच्छादकोभवति न तनुरतनुर्महान् लोकत्रयप्रकाशकोयोदिनकरः दिवसेप्रसृतकरः सूर्यस्तदाच्छादकोभवति। अथ तस्याच्छादकत्वमांतरालिकं न प्रवाहपरंपरागतमित्याह-नासीदिति। मेघः प्रावृट्कालात्पूर्वं ग्रीष्मे नासीत्. अथ पश्चात् शरत्कालेपि नासीत् एवमेवंविधोमेघः सूर्यं पश्यतोजनस्य दृशमेव स्थगय-

ति आवृणोति नार्कबिंबं तस्य मेघादप्यजितः क-
रप्रसारशालित्वादित्यर्थः । एवं सत्यपि लोके सू-
र्योनिष्प्रभइति प्रतीतिः प्रातिभासिकीत्याह-नोचेदि-
ति । एवमुक्तप्रमेयं नोचेत्सूर्यएव आच्छादितइति
चेत्तर्हिअर्कंविना जलधरपटलं सूर्यावरकीभूतंमेघप
टलं कस्माद्भासते सूर्यस्य घनपटलेन तिरोहितत्वात् ।
घनपटलं कस्मात् प्रकाशांतरात् ज्ञायते सूर्य-
स्याच्छिन्नत्वेन प्रकाशकत्वानर्हत्वादित्यर्थः । तथा
च सूर्यं पश्यतोजनस्य घनपटलेन दृष्टिरेवावृता
न सूर्यः । एतद्दृष्टांतावष्टंभेन भूमंडलस्यापि सूर्या-
वरकत्वं तद्वदेवेत्यर्थः । अथ यदर्थमेतदुपक्रांतं तदा-
ह-तद्वदिति । तद्वदंतरोत्पन्नं विश्वमपि पश्यतोदृशं
दृष्टिमेव पिधत्ते न परं ब्रह्मस्वरूपमाच्छादयति ।
तर्हि कथं न दृश्यत इत्याशंक्य दृश्यतएवेत्याह—
किंभूतं परं ब्रह्म स्वभासकं चालकं च स्वशब्देन
विश्वं तस्याभासकं चालकं च येन विचित्ररूपं
विश्वमाभाति तथा येन चलति सर्वव्यवहारं करो-
ति तत्परं ब्रह्म कथमाच्छादितुं शक्यते ब्रह्मव्यति-
रेकेण तस्य भासकचालकांतराभावात् । तथा च
जगदाकारादिमध्यावसानेषु वर्तमानं ब्रह्मैवसत्यं तद-

ज्ञानादुदितोजगदाकारः शुक्तिरजतवत्प्रातिभासिकइत्य-
र्थः ॥ ३२ ॥

**भुंजानःस्वप्नराज्यंससकलविभवोजागरंप्राप्यभूयोराज्यभ्रष्टोहमित्थंनभजतिविषमंतन्मृषामन्यमानः॥स्वप्नेकुर्वन्नगम्यागमनमुखमघंतेननप्रत्यवायी तद्वज्जाग्रद्दशायांव्यवहृतिमखिलांस्वप्नवद्विस्मरेच्चेत्॥३३॥**

एवं स्वप्नदृष्टांतेन प्रपंचस्य मिथ्यात्वं निरूपयति—भुंजानइति। ससकलविभवः सेनाकोशाद्युपस्कारयुक्तः सन्स्वप्नराज्यं भुंजानः पुरुषः भूयोजागरं प्राप्य प्राक्तनं दरिद्रं रंकं देहं निरीक्ष्याहं राज्यभ्रष्टइति विषमं शोकं न भजति। कुतः तत्स्वाप्नं राज्यं मृषा मन्यमानः। अथ तमेवार्थं दृष्टांतेन द्रढयति—स्वप्नइति। स्वप्ने अगम्यागमनमुखं सुरापानब्रह्मवधादि अघं पातकं कुर्वन् ततः प्रबोधं प्राप्तः सन् तेन पातकेन प्रत्यवायी प्रायश्चित्ती न भवति। यथा पूर्ववल्लोके व्यवहार्यएव दृश्यते। मनसाप्यनु-

तापं न प्राप्नोति । कुतः तन्मृषा मन्यमानइति पूर्ववत् । तथा च जाग्रद्दशायामेवपापकर्ता प्रायश्चित्तार्हो भवति । अथ जाग्रद्दशायामपि अखिलां पुण्यपाप व्यवहृतिं चेत् स्वप्नवद्विस्मरेत् तथापि तद्वत्प्रायश्चित्तार्होन भवति । यतस्तन्मृषा मन्यमानः इति प्रागुक्तमेव । तदुक्तं भगवता—"ब्रह्मण्याधायकर्माणीत्यादिना" ॥ ३३ ॥

**स्वप्नावस्थानुभूतंशुभमथविषमंतन्मृषा-**
**जागरेस्याज्जाग्रत्यांस्थूलदेहंव्यवहृतिवि-**
**षयंतन्मृषास्वाप्नकाले॥इत्थंमिथ्यात्वसि-**
**द्धावनिशमुभयथासज्जतेतत्रमूढ:सत्यं-**
**तद्भासकेस्मिन्निहहिकुतइदंतन्नविघ्नोव**
**यंहि॥३४॥**

अथ जाग्रत्स्वप्नावस्थयोरपि भ्रमजनकत्वमस्तीत्याह—स्वप्नेति । स्वप्नावस्थायामनुभूतं राज्यभोगेष्टप्राप्त्यादि तथा विषमं व्याघ्रभक्षणादि तत्सर्वं जागरे मृषा भवति । अथ जाग्रद्दशायां स्थूलदेहव्यवहृतिविषयं शुभं मृष्टाशनादि सर्वभोगसुखं तथा वि-

षमं आधिव्याधिजनितयातनादुःखं तत्स्वप्नकाले सर्वं मृषा भवति । इत्थममुना प्रकारेणोभयथापि अनिशं निरंतरं मिथ्यात्वसिद्धौ सत्यां तत्र मूढः यः सज्जते अभिनिवेशं करोति तत्कस्मात्कारणादिति वयं न विद्मः ॥ ३४ ॥



**जीवंतंजाग्रतीहस्वजनमथमृतंस्वप्नकालेनिरीक्ष्यनिर्वेदंयात्यकस्मान्मृतममृतममुंवीक्ष्यहर्षप्रयाति॥स्मृत्वाप्येतस्यजंतोर्निधनमसुयुतिंभाषतेतेनसाकंसत्यवंभातिभूयोल्पकसमयवशात्सत्यतावामृषात्वम्॥३५॥**

अथैतदेव सोदाहरणं निरूपयति—जीवंतमिति । इह लोके जाग्रत्यवस्थायां जीवंतं स्वजनं अथेदानीं स्वप्नकाले मृतं निरीक्ष्य अकस्मान्निर्वेदं दुःखं याति प्राप्नोति अथवा जाग्रत्यां मृतं विपन्नं स्वजनं स्वप्नकाले अमृतं जीवंतं वीक्ष्य हर्षं याति । अनेन जाग्रत्यनुभूतं स्वप्नकाले मृषा भवतीति दर्शितम् । अथ तत्र तदस्मरणेनान्यथा प्रतीयतइति चेत्तत्राह—स्मृत्वेति । एतस्यां जाग्रत्यां मृतस्य जं-

तोर्निधनं स्मृत्वापि अथवा जीवतः असुयुतिं जीवनं स्मृत्वापि तेन सह भाषते वार्ताः कथयति तथा मृतेन सह दीनालापं करोति तथा च स्वप्नकालेपि स्मरणवतोपि मृषात्वप्रतीतिर्भवतीति सूचितं । एवं सति उभयथामिथ्यानुभूतौसत्यामपि स्वप्ने मृषात्वप्रतीतिर्जाग्रत्यां च सत्यत्वप्रतीतिर्लोकानां कथमुत्पद्यतइत्यतआह—भूयइति । भूयोल्पकसमयवशात् सत्यता मृषात्वं वा भाति भासते न तात्विकं भूयांश्चाल्पकश्च तौ च तौ समयौ च यद्वशात् जाग्रतिश्चिरकालमस्ति ॥ तत्र दृढानुसंधानात् सत्यत्वं भासते स्वप्नस्तु अल्पसमयदृश्योस्यतोत्र मृषात्वं भासते । विचार्यमाणे तावदुभयोरपि असत्यत्वमित्यर्थः ॥ ३५ ॥

स्वाप्नस्त्रीसंगसौख्यादपिभृशमसतोयाच्च
रेतश्च्युतिःस्यात्साटृश्यात्तद्वदेतत्स्फुरति
जगदसत्कारणंसत्यकल्पम् ॥ स्वप्नेसत्यः
पुमान्स्याद्युवतिरिहमृषैवानयोःसंयुति-
श्चप्रातःशुक्रेणवस्त्रोपहतिरितियतःकल्प-
नामूलमेतत् ॥ ३६ ॥

इदानीमसदुपादानकं विश्वमपि सदिति सदृष्टांतमाह—स्वामेति । असतः अविद्यमानादपि स्वामस्त्रीसंगसौख्याद्रेतश्च्युतिः शुक्रद्रावो भवति । सादृश्याद्यावहारिकसत्यात्तद्वदसत्कारणं जगत् सत्यकल्पं स्फुरति नामैकदेशेनामग्रहणवत् । असत् सदसद्विलक्षणं अविद्याख्यं कारणं यस्य तदसत्कारणं एवंविधं जगत्सत्यकल्पं स्फुरति नतु सत्यं सुषुप्तावस्तमितत्वात् अथ दृष्टांतेन दार्ष्टांतिकसिद्धिमाह—स्वमइति ।स्वमे पुमान् सत्यः युवती स्त्री मृषा च परमनयोः स्त्रीपुरुषयोः संयुतिः सुरतमपि मृषा तथा प्रातर्जाग्रदवस्थायांशुक्रेण रेतसा वस्त्रोपहतिः प्रत्यक्षसिद्धा । एवमात्मा सत्यः स्त्री माया असत्या तयोर्युतिः संबंधः अध्यासिकः अतएव मृषा । तस्माज्जातं जगत् व्यवहारे सत्यं यतः सर्वं कल्पनामूलं काल्पनिकमित्यर्थः ॥ ३६ ॥

पश्यंत्यारामभस्यप्रतिदिवसममीजंत-
वःस्वापकालेपश्यत्येनंनकश्चित्करणग-
णमृतेमाययाक्रीडमानम् ॥ जाग्रत्यर्थ-
व्रजानामथचतनुभृतांभासकंचालकं

वानोजानीतेसुषुप्तौपरमसुखमयंकश्चि-
दाश्चर्यमेतत् ॥ ३७ ॥

अथावस्थात्रयेप्यनुभूयमानं आत्मानं केपि न विचि-न्वंतीत्याश्चर्यमाह—पश्यंतीति । अमी जंतवः जीवाः प्र-तिदिवसं स्वापकाले अस्यपरमात्मनआरामं क्रीडां प-श्यंति परंत्वेनमात्मानं कश्चिन्न पश्यति ।किंभूतमात्मानं-करणगणमृते बाह्येंद्रियव्यतिरेकेणापि मायया स्वामदे-हेंद्रियादिरूपया क्रीडमानं । अथास्तां तावन्मौढ्यदशा-स्वमावस्थायां जाग्रत्यामपि तनुभृतां चालकंतथार्थ-व्रजानां भासकं प्रकाशकंनिरंतरं न पश्यति तथा सु-षुप्तौ परमसुखमयं एवं विधं परमात्मानं केपि । न जानंति इत्येतन्महदाश्चर्यमित्यर्थः ॥ ३७ ॥

स्वप्नेमंत्रोपदेशःश्रवणपरिचितःसत्यए-
षप्रबोधेस्वाप्नादेवप्रसादादभिलषित-
फलंसत्यतांप्रातरेति ॥ सत्यप्राप्तिस्त्वस-
त्यादपिभवतितथाकिंचतत्स्वप्रकाशंये-
नेदंभातिसर्वंचरमचरमथोच्चावचंदृश्य-
जातम् ॥ ३८ ॥

ननु जाग्रदवस्थायामपि स्वप्नदृष्टांतेन मृषात्वे प्रोच्यमाने तस्यां गुरुमुखादुपनिषद्विचारादिना योब्रह्मबोधः सोपि मृषा भवति ततोब्रह्मापि वंध्यापुत्रवदसद्रूपं स्यादित्याशंक्याह—स्वप्नइति ॥ ३८ ॥

**मध्यप्राणंसुषुप्तौस्वजनिमनुविशंत्यग्निसूर्यादयोमीवागाद्याःप्राणवायुंतदिह-**
**निगदिताग्लानिरेषांनवायोः ॥ तेभ्योदृश्यावभासोभ्रमइतिविदितःशुक्तिकारौप्यकल्पःप्राणायामव्रतंतच्छ्रुतिशिरसि-**
**मतंस्वात्मलब्धौनचान्यत् ॥ ३९ ॥**

एवं स्वप्ननिर्देशेन जगन्मिथ्यात्वं निरूप्येदानीं जगत्सत्यत्वाभिव्यंजकायां जाग्रत्यामपि तन्मिथ्यात्वं निरूपयति—मध्यप्राणमिति।अमी अग्निसूर्यादयोवागादींद्रियदेवताः सुषुप्तौ तृतीयावस्थायां मध्यमं प्राणं विराजमनुविशंति किंभूतं विराजं स्वजनिं स्वस्य जनिर्यस्मिन् सतथा स्वोत्पादकं "मुखादिंद्रश्चाग्निश्चेति„ तथा—"चक्षोःसूर्योअजायतेति" श्रुतेः। कार्यजातस्य कारणे प्रवेशोयुक्तएवेत्यर्थः। तथा वागाद्याः इंद्रियगणाः

सुषुप्तौ प्राणवायुं इंद्रसंज्ञं अनुविशंति तत्तस्मात्कारणादेषां साधिदेवतानामिंद्रियाणां ग्लानिरस्तमयः निगदिता उपनिषत्प्रतिपादिता परंतु स्थूलसूक्ष्मप्रपंचलयरूपायां सुषुप्तावपि प्राणवायोरस्तमयोनास्ति यतः सुषुप्तौ श्वासरूपेण प्रत्यक्षतउपलभ्यमानत्वात् । अथ जाग्रत्यामपि चक्षुरादिभ्योयोदृश्यावभासोदृश्यानां रूपरसादीनां प्रतिभासः सभ्रमः। न तात्विकइति विदितः अथ भ्रमे दृष्टांतमाह—शुक्तिकेति । यथाशुक्त्यवच्छिन्नेधिकरणे रौप्यं प्रातिभासिकं प्रतीयते तद्वद्ब्रह्मण्यधिकरणे नामरूपात्मकं विश्वं प्रातिभासिकं । तस्मात्कारणादवस्थात्रयेपि नास्तमितंप्राणायामव्रतं स्वात्मलब्धौ श्रुतिशिरसि मतं नान्यच्चक्षुरादिव्रतं तस्यावस्था त्रयेप्यात्मलब्धावशक्तत्वात् ॥ ३९ ॥

नोकस्मादार्द्रमेधःस्पृशतिचदहनःकिंतु
शुष्कंनिदाघादार्द्रंचेतोनुबंधैःकृतसुकृत-
मपिस्वोक्तकर्मप्रजार्थैः ॥ तद्वज्ज्ञानाग्नि-
रेतत्स्पृशतिनसहसाकिंतुवैराग्यशुष्कंत-
स्माच्छुद्धोविरागःप्रथममभिहितस्तेन-
विज्ञानसिद्धिः ॥ ४० ॥

अथ वैराग्ययोगेनैव ज्ञानसिद्धिरित्यनुवदति—नोकस्मादिति। आर्द्रं जलयुक्तं एधः काष्ठं दहनोग्निरकस्मान्न स्पृशति किंतु निदाघशुष्कमेव स्पृशति । तद्वदनुबंधैर्भार्यादिविषयैरार्द्रं चेतः स्वोक्तकर्मप्रजार्थैः कृतसुकृतमपि ज्ञानाग्निः न स्पृशति । स्वोक्तकर्म स्वाश्रमवर्णोचितं प्रजाः पुत्राः "पुत्रेणैव जय्योनान्येन कर्मणेति"। तथा "नापुत्रस्यलोकोस्तीतिश्रुतेः"।तथा अर्थैःअर्थसाध्यैर्यज्ञदानादिभिः कृतसुकृतमपीत्यर्थः । किंतु वैराग्यशुष्कमेव चेतः ज्ञानाग्निः स्पृशति तस्मात्कारणात् शुद्धोविरागः वांतत्यक्तान्नवत् विषयवितृष्णता प्रथमं आवश्यकत्वेनाभिहितः प्रोक्तः । अनेन कृत्वा विज्ञानसिद्धिर्भवति। अत्रश्रुतिः— "नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः।परेणनाकंनिहितंगुहायांविभ्राजतेतद्यतयोविशंति" ॥ भाष्यं— एकेन त्यागेन वैराग्येण यतयः अमृतत्वं आनशुः प्राप्ताः परंतु न कर्मणा फलापेक्षेण न प्रजया पुत्रेण न धनेन दानादिवा। अथामृतत्वं निरूपयति—परेण परब्रह्मणा नाकं स्वांशीभूतं गुहायां हृद्याकाशे यन्निहितं निधिवत् गोपितं वस्तु यच्चार्थप्रकाशकत्वेन भ्राजते स्फुरति तदमृतं यतयोविशंति वैराग्यज्ञानगर्भमिति यः कश्चित्पठति ॥ ४० ॥

यत्किंचिन्नामरूपात्मकमिदमसदेवोदि-
तंभातिभूमौयेनानेकप्रकारैर्व्यवहरति
जगद्येनतेनेश्वरेण॥ तद्वत्प्रच्छादनीयं
निभृतरशनयायद्वदेवद्विजिह्वस्तेनत्यक्ते-
नभोज्यंसुखमनतिशयंमागृधोन्यद्धना-
घम्॥ ४१ ॥

अथ प्रागुक्तोपदेशक्रमे ईशावास्योपनिषदुक्तां श्रुतिं संवादयन्नाह—यत्किंचिदिति। यत्किंचिदसदेवोदितं नामरूपात्मकमिदं शुक्तिकारजतवदिदंत्वेन भूमौ येन भासते तथा गच्छतीति जगद्येन कृत्वा अनेकप्रकारैर्व्यवहरति तेनेश्वरेणेदं तद्वत्प्रच्छादनीयं आच्छादनीयं। किंवत् यद्वन्निभृतरशनया निश्चयेन ज्ञातया रज्वा एषः प्रातिभासकत्वेन ज्ञातः द्विजिह्वः सर्पः आच्छाद्यते तद्वज्जगद्भासकत्वेन चालकत्वेन च संविद्रूपत्वेन निश्चितेनपरमात्मनाजगदाच्छादनीयं तेन जगदाभासेन त्यक्तेभ दूरतोपास्तेन केवलाभावे प्राप्ते अनतिशयमत्युत्कृष्टं आत्यंतिकं सुखं भोज्यं परंतु अन्यद्विलक्षणं धनादिकं विषयसुखं मागृधः माभिकांक्षयेति उपदेशत्रयं। श्रुतिश्च—"ईशावास्य मिदꣳसर्वंयत्किंचिज्जगत्यांजगत्। तेनत्यक्तेन-

भुंजीथामागृधःकस्यस्विद्धनं"॥भाष्यं—इदं पुरोभासमानं यत्किंचिन्नामरूपात्मकं सर्वमाब्रह्मस्तंबपर्यंतं गच्छतीति जगत् व्यवहारवत् जगत्यां पृथिव्यां यद्भाति तत् ईष्टे इति ईट् तेन ईशा सर्वोत्कृष्टेन परमात्मना कृत्वावास्यं। वसआच्छादने आच्छादनीयं जगद्भासकत्वेन चालकत्वेन ज्ञातेन परब्रह्मणा प्रातिभासिकं जगदाच्छाद्यं तुच्छत्वेन ज्ञेयं ।एवं तेन जगदाभासेनत्यक्तेन दूरतोपास्तेनावशिष्टमात्मस्वरूममानंदात्मकं भुंजीथाः परंतु धनविषयसुखं मागृधः गृधुअभिकांक्षायां इदं कस्य स्वित् किमुपादानमिति ज्ञात्वा माभिकांक्षय ॥ ४१॥

जीवन्मुक्तिर्मुमुक्षोःप्रथममथततोमुक्तिरात्यंतिकीचतेभ्यासज्ञानयोगाद्गुरुचरणकृपापांगसंगेनलब्धात् ॥ अभ्यासोपिद्विधास्यादधिकरणवशाद्दैहिकोमानसश्चशारीरस्त्वासनाद्योल्युपरतिरपरोज्ञानयोगःपरोक्तः ॥ ४२॥

अथ द्विधामोक्षोपायमाह—जीवन्मुक्तिरिति । उपरतिः प्रपंचोपशमः शेषं स्पष्टम् ॥ ४२ ॥

सर्वानुन्मूल्यकामान्हृदिकृतनिलया-
न्क्षिप्तशंकूनिवोच्चैर्दीर्यद्देहाभिमानस्त्य-
जतिचपलतामात्मदत्तावधानः॥ यात्यू-
र्ध्वस्थानमुच्चैःकृतसुकृतभरोनाडिकाभि-
र्विचित्रंनीलश्वेतारुणाभिःस्रवदमृतभ-
रंगृह्यमाणात्मसौख्यः॥ ४३ ॥

अथ प्रथममुद्दिष्टां जीवन्मुक्तिमाह—सर्वानिति। हृदि कृतनिलयाननेककल्पपर्यंतं संस्काररूपेण हृदिस्थितान् सर्वान्कामान् मनोरथानुन्मूल्य समूलमुत्खातान् कृत्वा दीर्यद्देहाभिमानः सन् चपलतां त्यजति अहंममताभिमानमुत्सृज्य मनोवेगं त्यजति । किंभूतः आत्मदत्तावधानः आत्मनि दत्तं अवधानं अविरतानुसंधानं येन तथा । एवं तथाभूतः सन्नुच्चैरूर्ध्वस्थानं सर्वोत्कृष्टं ब्रह्मरंध्रं सुषुम्ना विवरेण याति। किं भूतं स्थानं नीलश्वेतारुणाभिर्नाडिकाभिर्विचित्रं सहस्रदलं चक्रं । पुनः किंभूतः स्रवदमृतभरं कुंडलीमुखनिर्भेदे नामृतं स्रवतीत्यर्थः । किंभूतोजीवन्मुक्तः कृतसुकृतभरः कृतानेकपुण्यपुंजः पुनः किंभूतः गृह्यमाणात्मसौख्यः ब्रह्मानंदवानस्मीति किं-

च्चिद्दुर्वरिताहंकारशेषइत्यर्थः । अत्रश्रुतिः—कंडिकाचतुष्टयं—"यदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताः।अथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुते १ तद्यथाहिनिर्ल्वयनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेद ५ शरीर ५ शेतेथायमनस्थिकोशरीरः प्राज्ञआत्माब्रह्मैवलोकएवसम्राडितिहोवाचयाज्ञावल्क्यः २ तदप्येतेश्लोकाः भवंति अणुःपंथावितत:पुराणोमाङ्स्पृष्टोनुवित्तोमयैव।तेनधीराअपियंतिब्रह्मविदेउत्क्रम्यस्वर्गलोकमितोविमुक्ता ३ तस्मिन् शुक्लमुतनीलमाहुः पिंगल ५ हरितंलोहितंच।एषवःपंथाब्रह्मणाहानुवित्तस्तेनेतिब्रह्मवित्तैजसः पुण्यकृच्च"। ४ भाष्यं—अस्य मुमुक्षोः पुरुषस्य हृदि स्थिताः सर्वे कामाः संकल्पाः यदा प्रमुच्यंते शांताः भवंति । अथेत्यनंतरं तदानीमित्यर्थः मर्त्योमरणधर्मात्मकोपि अमृतोमुक्तोभवति किंपुनर्देवादिः । अथामृतत्वमाह—अत्रेति । अस्मिन् देहे वर्तमानएव ब्रह्मसमश्नुते परमानंदमनुभवति । अथ शरीरे वर्तमानः सन् तदभिमानशून्यइति सदृष्टांतमाह—तद्यथेति । अहेः सर्पस्य निर्ल्वयनी निर्मोकः कंचुकं मृतानिर्जीवा वल्मीके. सर्पस्थाने प्रक्षिप्ता सती शयीत निश्चेष्ट-

तया स्थिता दूरात्सर्पइव दृश्यते परंतु सर्पकृत्यं न करोति एवं। तद्वत् इदमयं पुरुषः शरीरमेवाधिष्ठाय शेते निश्चेष्टतया अवतिष्ठते अथेत्यनंतरं अयं प्राज्ञः आत्मा जीवः अनस्थिकः अस्थिरूपं स्थूलदेहं तदभिमानशून्यः। तथा अशरीरः शरीरं सूक्ष्मशरीरं तदभिमानशून्यश्च भोसम्राडितिसंबुध्य याज्ञवल्क्योजनकं प्रत्युवाच—तदप्येते श्लोकाइति। अत्रार्थे श्लोकाः प्रसिद्धमंत्राः संति तानेव याज्ञवल्क्यआह अणुरिति। अणुः सूक्ष्मोमार्गः सुषुम्नामार्गविवरोपलक्षितः विततोविशिष्टतरः श्रेष्ठतमः एवं विधोमार्गः मा ऽ स्पृष्टः मम गुरुमुखात् कर्णाध्मातोजातः अनंतरं मयैव अनुवित्तः अनुष्ठितः तेन मार्गेण धीराः ब्रह्मविदः पुरुषाः अपि इतः प्रपंचाद्विमुक्ताः संतः स्वर्गलोकं ब्रह्मरंध्राख्यं स्थानं यांति प्राप्नुवंति तस्मिन्विचित्रवर्णानाड्यः संतीत्याह—शुक्लमित्यादि। एवमध्यात्मरीत्या ख्यानं केपि अधिदैविकस्थित्या विष्ण्वादिलोकप्राप्तये कुर्वंति। एवमेषः पंथा मार्गः ब्रह्मणा मत्तः पूर्वं अनुवित्तोनुष्ठितः। तेनैव मार्गेण ब्रह्मवित्तैजसः विराजत्वं प्राप्तः सुकृदेतिनान्यइत्यर्थः॥ ४३ ॥

प्रापश्यद्विश्वमात्मेत्ययमिहपुरुषःशोक-
मोहाद्यतीतःशुक्रंब्रह्माध्यगच्छत्सखलु
सकलवित्सर्वसिध्यास्पदंहि॥ विस्मृत्य-
स्थूलसूक्ष्मप्रभृतिवपुरसौसर्वसंकल्पशू-
न्योजीवन्मुक्तस्तुरीयंपदमधिगतवान्पु-
ण्यपापैर्विहीनः ॥ ४४ ॥

अस्मिन्नर्थे ईशावास्योपनिषदुक्तांश्रुतिंसंवादयति ॥ अयं पुरुषइहास्मिन् देहे वर्तमानः सन् विश्वं आत्मेति प्रापश्यत् पश्यतिस्म विश्वं विश्वाकारेण नापश्यत्किंत्वा-त्माकारेणैव। किंभूतः शोकमोहाद्यतीतः एवंविधः सन् शुक्रं शबलं ब्रह्म हिरण्यगर्भाख्यं अध्यगच्छत् अधिग-तवान् एवं हिरण्यगर्भत्वं प्राप्तः सकलवित्सर्वज्ञोजातः। तथा सर्वसिद्धीनामणिमाद्यष्टानां आस्पदं स्थानं च-जातः तथासौ पुरुषः स्थूलसूक्ष्मप्रभृति वपुर्विस्मृत्य सर्व-संकल्पशून्यः सन् तुरीयं पदमधिगतवान् आत्मसुखमनु-भवतिस्म। ततः पुण्यपापैर्विहीनः सकलकर्मातीतः। अत्र-श्रुतिः—सार्धकंडिका—"यस्मिन्त्सर्वाणिभूतान्यात्मैवाभू-द्विजानतः। तत्रकोमोहःकःशोकएकत्वमनुपश्यतः। स-पर्यगाच्छुक्रमकायमव्रणमस्नाविरङ्शुद्धमपापविद्धम्"

भाष्यं—यस्मिन्काले विजानतोविज्ञातवतः पुरुषस्य सर्वभूतानि आत्मैवाभूत्सकलं ब्रह्मैवाभूत् तत्र तस्मिन्काले कोमोहः किमज्ञानं तथा तन्मूलः शोकः कः । नकोपीत्यर्थः किंभूतस्यविजानतः एकत्वमभेदमनुपश्यतः सर्वत्रैकत्वभावनयैव विज्ञातस्वरूपइत्यर्थः । एवं सजीवन्मुक्तः शुक्रं शबलं हिरण्यगर्भस्वरूपं पर्यगात् प्राप्तवान्। किंभूतं शुक्रं अपापविद्धं पापमहंकारस्तेनास्पृष्टं अतएव शुद्धमपि प्राप्तवानित्यर्थः। पुनः किंभूतं अस्नाविरं स्नायवः शिरास्तत्स्वरूपं स्थूलदेहं तस्मादतीतमस्नाविरं तथा अव्रणं व्रणं चिह्नं सूक्ष्मभूतेंद्रियप्राणावस्थात्मकं लिंगदेहं तस्मादप्यतीतमेवं चतुर्थे महाकारणे देहे वर्तमानमित्यर्थः ॥ ४४ ॥

यःसत्वाकारवृत्तौप्रतिफलतियुवादेहमात्रावृतोपितद्धर्मैर्बाल्यवार्द्ध्यादिभिरनुपहतः प्राणआविर्बभूव॥श्रेयान्साध्यस्तमेतंसुनिपुणमतयःसत्यसंकल्पभाजोप्यभ्यासाद्देवयंतःपरिणतमनसासाकमूर्ध्वंनयंति॥४५॥

अथ जीवन्मुक्तस्य मनः प्राणाऊर्ध्वंगच्छंतइत्येतस्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयति—यइति ।

यआत्मा सत्वाकारवृत्तौ प्रतिफलति सयुवा प्राणः आविर्बभूव सत्वगुणोपपन्नोजीवइत्यर्थः । सदेहमात्रावृतोपि बाल्यवार्द्ध्यादिभिस्तद्धर्मैरनुपहतः सन् श्रेयान् कल्याणरूपस्तथा साध्यः साधयितुं उत्तमां गतिं प्रापयितुं योग्यः तमेतं प्राणं सुनिपुणमतयः कुशलबुद्धयः सत्ये परब्रह्मणि संकल्पोमनोगतिर्येषां ते तथाविधाः पूर्वोक्तादभ्यासाद्देवत्वं प्राप्तुमिच्छंतः परिणतमनसा विविक्तेन मनसा सह ऊर्ध्वं नयंति। अत्रश्रुतिःतृतीयाष्टके "युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः । तंधीरासःकवयउन्नयंतिस्वाध्यो ३ मनसादेवयंतः।" भाष्यं—बाल्यवार्धकाद्यैर्देहविकारैर्विरहितोयुवा मुख्यः प्राणः सुष्ठुवासः प्रावरणं यस्य सत्वाकारांतःकरणवृत्तिप्रतिबिंबितः परिवीतः शरीरावृतः सन्नगात् जीवद्दशां प्राप्तः उ इति निश्चयेन सजायमानः प्रादुर्भूतमात्रः सन् श्रेयान् सत्कर्मनिरतोभवति इति स्वाध्यः सुखेनाराध्यः तमेव धीरं धीरासः दृढव्रताः कवयः क्रांतदर्शिनोज्ञानिनः देवयंतोदेवत्वं प्राप्तुमिच्छंतः मनसा सह उन्नयंति सुषुम्नामार्गेण ऊर्ध्वं नयंति ब्रह्मरंध्रं प्रापयंति ॥ ४५ ॥

प्रायोकामोस्तकामोनिरतिशयसुखा-
यात्मकामस्तदासौतस्प्राप्तावाप्तकामः
स्थितचरमदशस्तस्यदेहावसाने ॥ प्रा-
णानैवोत्क्रमंतिक्रमविरतिमिताःस्वस्व-
हेतौतदानींकायंजीवोविलीनोलवण-
मिवजलेखंडआत्मैवपश्चात्॥ ४६ ॥

अथ निर्वाणमुक्तिमाह—प्रायइति । प्राङ् निरूपितोजीवन्मुक्तः पुरुषः प्रायः बाहुल्येन अकामएव तिष्ठति यतोस्तकामः आत्माकारस्य मनसः विक्षेपाभावात् । परंतु निरतिशयसुखं परमानंदः तदर्थं आत्मकामः आत्माकारः कामोयस्य सतथा अथ तत्प्राप्तौ आप्तकामः परमानंदेक्षुद्रानंदानामंतर्भूतत्वात्। तदुक्तं भगवता—"यंलब्ध्वाचापरंलाभंमन्यतेनाधिकंततः" किंभूतः स्थितचरमदशः स्थिता चरमा प्रांत्यादशा यस्य । अथ दशातीतत्वमाह—तस्येति । तदस्य पुरुषस्य देहावसाने प्राप्ते सति प्राणाः नैव उत्क्रमंति उत्क्रमणं हि पुनर्देहारंभाय कल्पते प्रकृते तु तथा न भवति किंतु स्वस्वहेतौ स्वकारणे क-

मविरति क्रमेणनाशं इताः प्राप्ताः तदानीं क्वायं जीवदशापन्नः क्वास्ति न क्वापीत्यर्थः ।यतोजले लवणमिव विलीनः लयं प्राप्तः तदा पश्चादखंडआत्मैव तिष्ठति । अवच्छेदकाभावात् । "ब्रह्मैव सन्ब्रह्माप्येतीति" श्रुतेः । जीवः प्रथमंब्रह्मैवासीत् मध्ये जीवदशां प्राप्तः पुनः ब्रह्मत्वमेवाप्नोतीत्यर्थः ॥ ४६ ॥

पिंडीभूतंयदंतर्जलनिधिसलिलंयातितत्सैंधवाख्यंभूयःप्रक्षिप्तमस्मिन्विलयमुपगतंनामरूपंजहाति ॥ प्राज्ञस्तद्वत्परात्मन्यथभजतिलयंतस्यचेतोहिमांशौवागग्नौचक्षुरर्केपयसिपुनरस्त्वग्नेतसीदिक्षु कर्णौ ॥ ४७ ॥

अथ लवणमिवजलइत्येतद्दृष्टांतंविशदयन्नाह—स्पष्टोर्थः । अत्रश्रुतिः—"यथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतनहास्योद्ग्रहणायैवस्याद्यतोयतस्त्वाददीतलवणमेवैवंवाअरेइदंमहद्भूतमनंतमपारंविज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः" भाष्यं—मैत्रेयी

ज्येष्ठपत्नीं प्रति याज्ञवल्क्यउवाच।--अरेमैत्रेयि सैं-
धवखिल्यः सैंधवपिंडउदके प्रास्तः प्रक्षिप्तः सन्ननु
विलीयेत विलीनः सन्नुदकत्वमेव प्राप्नोति न प्र-
कारांतरं । ह इति निश्चयेन पुनरस्य सैंधवस्य
उद्ग्रहणाय नैव स्यात् यत्सैंधवं जले प्रक्षिप्तं तस्य
उत् ऊर्ध्वग्रहणं बहिर्निष्कासनं तदर्थं नैव स्यात्
पुनस्तस्य नैव प्राप्तिः । अथ तदेवाह–तु पुनः
लवणं क्षारोदकमेव लक्ष्यते एवममुना प्रकारेण
इदं महद्भूतं अनंतं अक्षोभ्यं अपारं अमर्यादं वै-
राजरूपं विज्ञानघने परमात्मस्वरूपएव एतेभ्यो-
भूतेभ्यः स्वकारणेभ्यः समुत्थाय उदयं प्राप्य तां-
न्येव भूतानि अनुलक्षीकृत्य विनश्यति । तस्य न
प्रेत्यसंज्ञास्ति इति–प्रेत्य नाशं प्राप्य संज्ञा नास्ती-
ति । स्वकारणे लीयंतइत्यत्र आर्तभागयाज्ञवल्क्य-
योः संवादश्रुतिमुक्तवान् । तथा च श्रुतिः–"याज्ञव
ल्क्यइतिहोवाच । यत्रास्य पुरुषस्यमृतस्याग्निंवाग-
प्येतिवातंप्राणश्चक्षुरादित्यंमनश्चंद्रंदिशःश्रोत्रंपृथिवीꣳ-
शरीरमाकाशमात्मौषधीर्लोमानिवनस्पतीन्केशाअप्सु-
लोहितंचरेतश्चनिधीयतेक्वायंतदापुरुषोभवतीत्याहरसौ-

म्यहस्तं आहर” भाष्यं–जारत्कारवआर्तभागोयाज्ञवल्क्यं प्रति वदति भो याज्ञवल्क्य अस्य जीवन्मुक्तस्य पुरुषस्य मृतस्य त्यक्तदेहस्य वागग्निं स्वाधिदैवतं अप्येति प्राविशति चक्षुरादित्यं प्रविशति मनश्चंद्रं दिशः श्रोत्रं प्रविशतीत्यधिदैवतं प्रवेशउक्तः। अथ शरीरं पृथिवीं स्वकारणभूतां प्रविशति आत्मा हृदयाकाशे प्रविशति लोमानि कंठादधःस्थानि औषधीः प्रविशंति केशाः मूर्धन्याश्ववनस्पतीन् वृक्षान्प्रविशंति रेतः शुक्लंलोहितंच अप्सु प्रविशति तदा क्वायं पुरुषोभवतीति प्राप्तसंकेतोयाज्ञवल्क्योवदति आंहरेति भोः सौम्य आर्तभागहस्तं आहरेति हस्तं देहीत्यर्थः ॥ ४७ ॥

क्षीरांतर्यद्वदाज्यंमधुरिमविदितंतत्पृथक्भूतमस्माद्भूतेषुब्रह्मतद्वद्व्यवहृतिविदितंश्रांतविश्रांतिबीजम्। यंलब्ध्वालाभमन्यत्तृणमिवमनुतेयत्रनोदेतिभीतिःसांद्रानंदंयदंतःस्फुरतितदमृतंविध्यतोह्यन्यदार्तम् ॥ ४८ ॥

अथ सर्वं विश्वं आत्मसंबंधेनैवचलतीत्याह—क्षीरांतरिति यद्वत्क्षीरांतः दुग्धमध्ये आज्यंघृतमस्तीति मधुरिमविदितं मधुरिम्णा माधुर्येण विदितं ज्ञातं अथ तद्धृतं अस्मात्क्षीरात्पृथक्भूतं भिन्नं मथनाज्ज्ञातं यतः पुनः घृतं क्षीरांतर्निक्षिप्तंसद्दुग्धत्वं नाप्नोति तद्वद्भूतेषु ब्रह्मास्तीति व्यवहृतिः व्यवहारः तेन विदितं तच्च भूतापेक्षया भिन्नं। यतःश्रांतविश्रांतिबीजं जायत्यां श्रांतस्य पुरुषस्य सुषुप्तौ या विश्रांतिः योविश्रामः तस्य बीजं कारणं यतः यं लब्ध्वा प्राणी लाभमन्यत्तृणमिव मनुते तथा यत्र यस्मिन्ब्रह्मणि भीतिः नोदेति अद्वैतत्वात्। "द्वितीयाद्वै भयं भवतीतिश्रुतेः" यतः सुषुप्तौस्थूलसूक्ष्मप्रपंचलये मनः केवलं आत्माकारं भवति एवं सांद्रानंदं वस्तु यदंतः स्फुरति तदमृतं विद्धि जानीहि अतोन्यत्पदार्थजातं आर्तं बाधितं शुक्तिकारजतवदुत्तरक्षणे बाधदर्शनात्। अयमर्थः—केवलमुदकरूपे दुग्धे उदकाद्विलक्षणं यन्माधुर्यं। तदंतर्गतस्य आज्यस्यैव संभवति एवमसद्रूपे देहे चलनादिव्यापारस्तथेंद्रियेष्वर्थप्रकाशः एतदात्मकृतमेव न शरीरकृतं यतोमृतशरीरे तथात्वं न दृ-

श्यते अनेन तेजोमयोमृतमयस्तथांतर्याम्यमृतइत्यादिश्रुतीनांविषयोदर्शितः ॥ ४८ ॥ ७ ॥

ओतःप्रोतश्चतंतुष्विहविततपटश्चित्रवर्णेषुचित्रस्तस्मिन्जिज्ञास्यमानेननुभवतिपटःसूत्रमात्रावशेषः ॥ तद्वद्विश्वंविचित्रंनगनगरनरग्रामपश्वादिरूपंप्रोतंवैराजरूपेसवियतितदपिब्रह्मणिप्रोतमोतम् ॥ ४९ ॥

अथ इदं विश्वं परंपरया ब्रह्मण्येव ओतं प्रोतमिति दर्शयति—ओतइति । इह लोके विततोविस्तृतः पटः तंतुषु ओतः प्रोतोदृश्यते । किंभूतेषु तंतुषु विचित्रवर्णेषु किंभूतः पटः विचित्रवर्णः तस्मिन्पटे जिज्ञास्यमानेसम्यक्विचार्यमाणे ननु निश्चयेनपटः सूत्रमात्रावशेषोभवति ऊर्ध्वतंतुषुओतः तिर्यक्तंतुषुप्रोतः एवंविधोयः पदार्थः सपटसंज्ञां प्राप्तः परंतु तत्र सूत्रव्यतिरेकेणान्यः कोपि पदार्थोनानुभूयते तद्वन्नगनगरनरग्रामपश्वादिरूपं गुणकर्मविभागेन विचित्रं विश्वं वैराजरूपे ब्रह्मांडविग्रहे प्रोतं सच वैराजः वियति

आकाशे प्रोतः तदपि वियत् ब्रह्मणि प्रोतं अनेन अक्षरं ब्रह्म प्रतिपादितं। अत्र श्रुतिः—"सहोवाचयदूर्ध्वं- गार्गिदिवोयदर्वाक्। पृथिव्यायदंतराद्यावापृथिवीइमेय- द्भूतंचभवच्चभविष्यच्चेत्याचक्षतेआकाशएवतदोतंचप्रोतं- चेतिकस्मिन्नुआकाशओतश्चप्रोतश्चेतिसहोवाचैतद्वैतद- क्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वह्रस्वमदीर्घम - लोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमस्पर्श- मगंधमरसमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राण- ममुखमनामगोत्रमजरममरमभयममृतमरजमशब्दम - विवृतमसंवृतमपूर्वमनपरमनंतरमबाह्यंनतदश्नोतिकंचनत- दश्नोतिकश्चन"। भाष्यं—जनकसभायां याज्ञवल्क्येन सह विवदमानेषु ब्राह्मणेषु गर्गकन्या वाचक्नवी त- या पृष्टोयाज्ञवल्क्यस्तस्याः प्रश्नं अनुवदतिस्म सहोवाचेति—सयावल्क्यः ह इति निश्चित्य गार्गी प्रत्युवाच।—भोगार्गि त्वयैतत्पृष्टं तत्किं दिवोयदू- र्ध्वं स्वर्गादप्युच्चं तथा पृथिव्याः सकाशात् यत् अर्वाक् अधोवर्तते तथा यदंतरा यन्मध्यइमे दृश्यमानेषुद्यावापृथिवी तथा यद्भूतं अतिक्रांतं भवद्वर्तमानं भविष्यदागामि पदार्थमित्याचक्षते त- त्कस्मिन्नोतं प्रोतं चेति त्वयापृष्टे सति मयोत्तरितं

तदाकाशएवोतं च प्रोतं चेति । पुनः त्वया पृष्टं कस्मिन्वा आकाशओतश्च प्रोतश्च । तत्रोत्तरं श्रूयतामित्याह—सहोवाचेति । भोगार्गि त्वया एतद्वै पृष्टं तर्हि ब्राह्मणाः ब्रह्मज्ञाः पुरुषाः एतदक्षरं अविनाशि ब्रह्म अभिवदंति तस्मिन्नक्षरे ब्रह्मणि आकाशओतश्च प्रोतश्चेतिशेषः । तत्र किंभूतमक्षरमिति यदि पृच्छसे तर्हि श्रूयतामित्याह—अस्थूलमिति । स्थूलादि अणुमहद्दीर्घह्रस्वपरिमाणातीतं जात्यभिप्रायेणैकवचनं चतुर्विधत्वनिर्देशः अलोहितमिति लोहितादिवर्णातीतं तथा अस्नेहं स्नेहश्चिक्कणतागुणस्तद्रहितं । अच्छायममूर्तं अतमस्तमोभावरूपाज्ञानमायाख्यं ततोप्यतीतं अवायुमनाकाशं ताभ्यामतीतं असंगमसन्मीलितं अस्पर्शं स्पर्शरहितं तथा अचक्षुष्कमित्यादितः इंद्रियरहितं अथ तद्गतं अधिदैवरूपं तेजोन भवतीत्यतेजस्कं तर्हि इंद्रियचालकः प्राणोभविष्यतीति चेत्तदपिनिषेधयति अप्राणमिति । अमुखं मुखरहितं नामगोत्ररहितं च अजरं जरातीतं च अमरणस्वभावं द्वितीयाभावात् अभयं अमृतं नित्यमुक्तस्वभावं अरजं गुणातीतं लोकातीतं च अशब्दं शब्दागोचरं अविवृत्तं विवर्तव

र्जितं असंहतमवच्छेदरहितं । अपूर्वंन विद्यते किंचित्पूर्वं यस्मात् अनपरं न विद्यते अपरं यस्मात् अनंतरं न विद्यते अंतरं अभ्यंतरं यस्य अबाह्यं न विद्यते बाह्यावरणं यस्य एवं विधं यत्तत्कंचन कमपि न अश्नोति नांगीकुरुते असंगोदासीनत्वात् । तथा कश्चन तन्नाश्नोति व्याप्नोति अप्राप्तत्वात् ॥४९॥

रूपंरूपंप्रतीदंप्रतिफलनवशात्प्रातिरूप्यं
प्रपेदेत्ध्येकोद्रष्टाद्वितीयोभवतिचसलिले
सर्वतोनंतरूपः ॥ इंद्रोमायाभिरास्तेश्रु-
तिरितिवदतिव्यापकंब्रह्मतस्माज्जीवत्वं
यात्यकस्मादतिविमलतरेबिंबितंबुद्ध्यु-
पाधौ ॥ ५० ॥

अथात्मनोबिंबप्रतिबिंबन्यायेन सर्वात्मकत्वमाह—रूपंरूपमिति । अत्र प्रतिबिंबविषयश्रुतित्रयमुपन्यस्तवान् इदं ब्रह्म प्रतिफलनवशाद्रूपंरूपं प्रति प्रातिरूप्यं प्रपेदे प्रतिरूपस्य भावः प्रातिरूप्यं। अत्रश्रुतिः—"दध्यङ्ङाथर्वणोऽश्विभ्यांउवाच । तदेतदृषिः पश्यन्नवोचत् रूपंरूपंप्रतिरूपोबभूवेति ।" अत्रेयमाख्यायिका — पर्वं अश्विनौ देवभिषजावात्मज्ञानोपदेशार्थं दधीचिं

प्रति गत्वा आवाभ्यामात्मविद्योपदेष्टव्येति ऊचतुः । तेनोत्तरितं क्षणांतरे उपदेक्ष्यामीति । दधीचवाक्यं श्रुत्वा स्वगृहं गतौ तदंतरे इंद्रः समागत्य दधीचिं प्रत्युक्तवान् त्वयैतौ मदीयभिषजौ नोपदेष्टव्यौ अथ यदिमदीयवचनं न श्रृणोषि तर्हि तव शिरः पोथयिष्यामि इत्युक्त्वा निर्गतः पुनरश्विभ्यामागमनं कृतं ततस्तौ दधीचमुखाद्विदितवृत्तांतावूचतुः भो दधीच क्षणांतरे उपदेक्ष्यामीति प्रतिज्ञा मिथ्या भवितुं नार्हतीति तर्हीदानीं तव शिरः स्थानांतरे निधायाश्वशिरस्त्वयि संयोज्यते तेन शिरसात्मविद्यामुपदिशस्व ततइंद्रआगत्याश्वशिरः छित्वा गमिष्यति पुनस्तव स्वाभाविकं शिरः संयोजयिष्यावइति नासत्यवचसा तथाविधायां सत्यां अश्वशिरसा मधुकांडमुपदिष्टवान् इति पूर्ववृत्तांतः। अथ दध्यङ्ङाथर्वणः अथर्वणस्यापत्यं आथर्वणः एवंविधो दधीचिः अश्विभ्यां यदुवाच तदेतदृषिर्वेदः पश्यन्नवोचत् तत्किं रूपंरूपं प्रतिरूपोबभूवेति । प्रतिबिंबितं रूपं यस्येतिप्रतिरूपइत्यर्थः। अथ द्वितीयां श्रुतिमाह—एक- इति। च परं एकोद्रष्टा सलिले द्वितीयोभवति। पश्यतीति द्रष्टा । अत्रश्रुतिः—"सलिलएकोद्रष्टाद्वितीयोभ-

वति" अथ तृतीयां श्रुतिं दर्शयति इंद्रइति —"इंद्रोमायाभिःसर्वतोनंतरूप आस्ते ।" इंद्रः परमात्मा मायाभिः कृत्वा सर्वतः अनंतरूपआस्ते । अत्र श्रुतिः—"इंद्रोमायाभिःपुरुरूपईयते" । पुरुरूपो बहुरूपः ईयते जायतइत्यमुना प्रकारेण श्रुतिः व्यापकं ब्रह्म वदति तदकस्माद्बुद्ध्युपाधौ प्रतिबिंबितंसज्जीवत्वं याति किंभूते उपाधौ विमलतरे स्वच्छतरे ॥ ५० ॥

तज्ज्ञाःपश्यंतिबुद्ध्यापरमबलवतोमाय-
याक्तंपतंगंबुद्धावंतःसमुद्रेप्रतिफलितम-
रीच्यास्पदंवेधसस्तम् ॥ यादृग्यावा-
नुपाधिःप्रतिफलतितथाब्रह्मतास्मिन्यथा-
स्यंप्राप्तादर्शानुरूपंप्रतिफलतियथाव-
स्थितंतत्सदेवम् ॥ ५१ ॥

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—तज्ज्ञाइति । पतनशीलः पतंगोजीवः तं पूर्वप्रतिपादितं जानंति ते तज्ज्ञाः शास्त्रविदः बुद्ध्या निश्चितांतःकरणवृत्त्या पश्यंति । अथ किंरूपत्वेन पश्यंतीत्याह— बुद्धाविति । बुद्धौ बुद्धिलक्षणे समुद्रे

अंतः वेधसः परमात्मनः प्रतिफलितमरीच्यास्पदं प्रतिफलिताः प्रतिबिंबिताये मरीचयः किरणाः तदेवास्पदं स्वरूपं यस्य स तथा । अथ तस्य पतनशीलत्वं प्रकटयन्नाह—परमेति । परमबलवतो-दुर्जयमायस्य वेधसोहिरण्यगर्भस्य मायया अक्तं व्याप्तं मुह्यमानं । अत्रश्रुतिः—"पतंगमक्तमसुरस्यमा-ययाहृदापश्यंतिमनसाविपश्चितः । समुद्रेअंतःकवयो-विचक्षतेमरीचीनांपदमिच्छंतिवेधसः" । भाष्यं—असुर-स्य बलवतोदुरंतमायस्य परमात्मनोमाययाक्तं व्याप्तं अतएव पतंगं पतनशीलं जीवं विपश्चितोज्ञानिनो-मनसः संकल्पात्मकस्य हृदा बुद्धिरूपेण बुद्ध्येत्यर्थः। अंतः पश्यंति समुद्दनाद्व्यापनात्समुद्रः सएव बुद्धिल-क्षणः तस्मिन्प्रतिफलितानां वेधसः ईश्वरस्य चित्स्व-रूपाणां मरीचीनां पदं स्थानं इति कवयः क्रांतदर्शिनः विचक्षते वदंति परं इच्छंति उपासते च । अथ श्लोकोत्तरार्धेन प्रतिबिंबप्रकारं विशदयन्नाह—यादृ-गिति । यद्रूपोयादृक् यत्प्रमाणोयावान् एवंविधो-यउपाधिः बुद्धिलक्षणः तस्मिन् तथा ब्रह्म प्रतिफ-लति । यादृगिति सत्त्वरजस्तमोमयः यावानिति स्थूलः सूक्ष्मोदीर्घोवर्तुलोवा यथोपाधिरस्ति तत्र तथैव स्वयं

सदैव यथावस्थितं सत्प्रतिफलति स्वमर्यादां न जहाति। अथ दृष्टांतमाह—यथेति। यथा आस्यं मुखं प्रा-प्रादर्शानुरूपं प्रतिफलति वर्तुलोदीर्घःस्थूलोलघुर्मलिनः शुद्धोवा यथा प्राप्तोयआदर्शो दर्पणस्तदनुरूपमेव प्रतिफलति परंतु स्वयं यथावस्थितमेव तिष्ठति तद्वत् ब्रह्मापि ॥ ५१ ॥

एकोभानुस्तदर्थंप्रतिफलनवशाद्यस्त्वने-
कोदकांतर्नानात्वंयात्युपाधिस्थितिगति-
समतांचापितद्वत्परात्मा ॥ भूतेषूच्चाव-
चेषुप्रतिफलितइवाभातितावत्स्वभावाव-
च्छिन्नोयःपरंतुस्फुटमनुपहतोभातिताव-
त्स्वभावैः॥ ५२ ॥

अथैतदेवदृष्टांतान्तरेण द्रढयन्नाह—एकोभानुरिति। स्पष्टार्थमिदंपद्यम् ॥ ५२ ॥

यद्वत्पीयूषरश्मौदिनकरकिरणैर्बिंबितैरे-
तिसांद्रंनाशंनैशंतमिस्रंगृहगतमथवा
मूर्छितैःकांस्यपात्रे॥तद्वद्बुद्धौपरात्मद्यु-

तिभिरनुपदंबिंबिताभिःसमंताद्भासंते
हींद्रियास्यप्रसृतिभिरनिशंरूपमुख्याःप-
दार्थाः॥ ५३॥

ननु जलादिष्वर्कप्रतिबिंबः स्वकीयं रूपमेव प्रकटयति न पदार्थांतरं एवमात्मप्रतिबिंबोजीवश्चेत्तर्हि कथं पदार्थांतरज्ञापकोभवतीत्याशंक्य सदृष्टांतमाह—यद्वदिति। यद्वत्पीयूषरश्मौ जलमयचंद्रे दिनकरकिरणैर्बिंबितैः सद्भिः सांद्रं निबिडं नैशं रात्रिभवं तमिस्रं अंधकारः नाशं एति प्राप्नोति। "आदित्येनचंद्रमाभातीतिश्रुतेः" अथ वा कांस्यपात्रेदिनकरकिरणैर्मूर्च्छितैः सद्भिर्गृहगतं गृहांतर्वर्ति तमिस्रं नाशमेतीति प्रतीतिसिद्धं। तद्वद्बुद्धौ बिंबिताभिः परमात्मद्युतिभिः समंताद्रूपमुख्याः पदार्थाः भासंते तर्हि निमीलितनेत्रस्यापि पदार्थभानमस्त्विति तत्राह—किंभूताभिः अनुपदं तत्कालं इंद्रियास्यप्रसृतिभिः इंद्रियास्यैः इंद्रियमुख्यैः प्रसृतिः प्रसारोयासां तास्ताभिः॥५३

पूर्णात्मानात्मभेदात्त्रिविधमिहपरंबुद्ध्यव-
च्छिन्नमन्यत्तत्रैवाभासमात्रंगगनमिव

जलेत्रिप्रकारंविभाति॥ अंभोवच्छिन्न-
मस्मिन्प्रतिफलितमतःपाथसोंतर्बहिश्च
पूर्णावच्छिन्नयोगेव्रजतिलयमविद्यास्व-
कार्यैःसहैव ॥ ५४ ॥

अथोपाधावेव त्रेधा ब्रह्मप्रतीतिरस्तीत्याह—पूर्णात्मेति। इहोपाधौ पूर्णं च आत्मा च अनात्माचेति त्रिविधं ब्रह्म भासते तत्रैकं परं पूर्णं उपाधेर्बाह्याभ्यंतरतोवर्तमानं। तथा द्वितीयं बुध्यवच्छिन्नं बुध्यायुतं। तथान्यत्तृतीयं तत्रैव बुद्धौ आभासमात्रंप्रतिबिंबस्वरूपं किमिव जले त्रिप्रकारं गगनमिव विभाति। अथ प्रकारत्रयमाह—एकं अंभोवच्छिन्नं उदकावृतं अपरं तस्मिन्नेवोदके प्रतिफलितं प्रतिबिंबितं तृतीयं अतोस्मात्पाथसः उदकात्सकाशात् अंतर्बहिश्चेति एवं पूर्णावच्छिन्नयोगेसति उपाधिभूता विद्या स्वकार्यैः प्रतिबिंबादिभिः सह लयं नाशं याति अधिष्ठानसाक्षात्कारे आभासोनश्यतीत्यर्थः ॥ ५४ ॥

हस्तेंतेदारुनार्योयुगपदगणितास्तंभसू-
त्रप्रयुक्ताः संगीतंदर्शयंत्योव्यवहृतिम-

परांलोकसिद्धांचसर्वाम् ॥ सर्वत्रानुप्रविष्टादभिनवविभवाद्यावदर्थानुबंधात्तद्वत्सूत्रात्मसंज्ञाद्यवहरतिजगद्भूर्भुवःस्वर्महांतम् ॥ ५५ ॥

अथ सूत्ररूपं सर्वात्मकं ब्रह्माह—दृश्यंतइति । युगपदेकसमयावच्छेदेन अगणिताअनेकाः दारुनार्यः काष्ठरचिताः अचेतनाअपि नार्योनर्तक्यः संगीतं वाद्यनृत्यात्मकं दर्शयंत्योदृश्यंते नह्यचेतनेषु तथात्वंयुक्तमित्याशंक्याह—किंभूतानार्यः स्तंभसूत्रयुक्ताः शिल्पकेन रचितं यत् स्तंभांतः सूत्रं तेन प्रयुक्ताः तालादिनियमेन चेष्टां प्रापिताः । अथ नकेवलं संगीतं दर्शयंत्यः किंतु लोकसिद्धां सर्वां व्यवहृतिं च लोकप्रसिद्धा सर्वाव्यवहृतिः व्यवहारः मल्लयुद्धशस्त्रसाधनांमृगयादिः तमपि दर्शयंत्यः तद्वत्सर्वत्रानुप्रविष्टात्सूत्रात्मसंज्ञात्परमात्मनः प्रेरकात् भूर्भुवःस्वर्महांतं जगद्व्यवहरति किंभूतात् अभिनवविभवात् अतर्क्यसामर्थ्यात् पुनः किंभूतात् यावदर्थानुबंधात् यावानर्थः प्रयोजनं तावानेव संबंधोयस्मात् यस्मिन्व्यवहारे यावत्प्रयोजनं तावदेवानुबध्नाति नियतत्वेन संबंधं प्राप-

यति नत्वानयतत्वेन ॥ अत्रश्रुतिः "वायुर्वैगौतमतत्सूत्रं-वायुनावागौतमसूत्रेणायंचलोकःपरश्चलोकःसर्वाणिच भूतानिसंदृब्धानिभवंतीति"। अथैतदर्थे ऋकूशाखीया श्रुतिः—"स्त्रियःसतीस्तांउमेपुंसआहुःपश्यदक्षण्वान्नविचेतदंधः।कविर्यःपुत्रःसइमाचिकेतयस्ताविजानात्सपितुःपितासत्"॥ भाष्यं—याः इदानीं स्त्रियः सतीः स्त्रीत्वंप्राप्ताः आहुर्लौकिकाः ताः उ तानेव मे मह्यं पुंसः पुरुषानाहुः प्रतिपादयंति तत्त्वज्ञाः । कथमन्यस्यान्यभावउच्यते एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनः तत्तद्देहावसानमात्रेण तत्तद्व्यपदेशोपपत्तेः श्रूयते हि—"त्वंस्त्रीत्वं पुमानसि त्वंकुमारउतवाकुमारीत्यादि" । स्त्रीत्वंपुंस्त्वं चोभयमपिवस्तुतोनास्तीत्युक्तं भवति श्रुतिस्तदभावं बोधयति।"नैवस्त्रीनपुमानेषनैवचायंनपुंसकः। यद्यच्छरीरमादत्तेतेनतेनतथोच्यते।"अमुमर्थमत्यंतनिगूढं अक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चित्पश्येत् जानाति। तथांधः 'अंतथारूपः स्थूलदृष्टिर्न विचेत् तत्र न विचेतति न जानाति किंतु पुत्रः वयसा अल्पोपि यःकविः क्रांतप्रज्ञः ज्ञानी स्यात् सइममर्थं आचिकेत जानाति एवमुक्तलक्षणस्य परमात्मनः जातानि स्त्रीत्वपुरुषत्वादीनिविजानात् औपाधिकानि विजानीयात् सपितुः

स्वोत्पादकस्यापि ज्ञानरहितस्य पिता सन् पितृवत्पूज्यो-
भवति। ५५ ॥ ७ ॥

तत्सत्यंयत्त्रिकालेष्वनुपहतमदः प्राणदि-
ग्व्योममुख्यंयस्मिन्विश्रांतमास्तेतदिहनि
गदितंब्रह्मसत्यस्यसत्यम् ॥ नास्त्यन्य-
त्किंचयद्वत्परमधिकमतोनामसत्यस्यस
त्यंसच्चत्यच्चेतिमूर्ताद्युपहितमवरंसत्य-
मस्यापिसत्यम् ॥ ५६ ॥

अथ सत्यशब्दव्यपदेश्यं ब्रह्माह—तदिति। यत्त्रिकालेषु भूतभविष्यद्वर्तमानेषु अनुपहतमबाधितं अदः अमूर्तं प्राणदिग्व्योममुख्यं प्राणाः मुख्यप्राणादयः दिग्व्योममुख्यशब्दात् कालादि तदेव सत्यम्। यद्वा प्रकारांतरेणाह—यद्यस्माद्ब्रह्मणः सकाशादन्यत्परमुत्कृष्टं अधिकं महत्किंचिदपि सत्यस्य नाम नास्ति यद्यस्ति तर्हि वेदेषु कथं न प्रसिद्धं अतः ब्रह्मैव सत्यत्वव्यपदेश्यम्। अथ सत्यशब्दव्युत्पत्तिमाह—सच्चत्यच्चेति। सन्मूर्तं पृथिव्यप्तेजोरूपं त्यच्चेति यदमूर्तौ वाय्वाकाशौ ताभ्यामुपहितं आश्रितं यत् अवरं शबलं ब्रह्म तस्यापि सत्यं ब्रह्म ॥ ५६ ॥

यत्किंचिद्भात्यसत्यंव्यवहृतिविषयेरौ-
प्यसर्पांबुमुख्यंतद्वैसत्याश्रयेणेत्ययमि-
हनियमःसावधिर्लोकसिद्धः॥ तद्वैसत्य-
स्यसत्येजगदखिलमिदंब्रह्मणिप्राविरा-
सीन्मिथ्याभूतंप्रतीतंभवतिखलुयतस्त-
त्त्वसत्यंवदंति ॥ ५७ ॥

अथ सत्यस्य सत्यमिति दृढीकुर्वन्सदृष्टांतमाह—यदिति। लोके व्यवहारविषये दृश्यजाते यत्किंचिद्रौप्यसर्पांबुमुख्यमसत्यं भाति शुक्तिकायां रजतं रज्ज्वां सर्पः मरीचिकास्वंबु एवमेतत्प्रमुखमसत्यं यद्भासते तत्स-त्याश्रयेणैव भासते शुक्तिकाद्यधिकरणं हि व्याव-हारिकं सत्यं तदाश्रयेणैव रौप्यसर्पांबुमुख्यमसत्यं भाति तद्व्यतिरेकेण प्रतिभासासंभवात् । इह लोके ऽयंनियमः सावधिः लोकसिद्धोदृष्टः सत्याश्रयेणै-वासत्यं भातीति नियमः लोकसिद्धोस्ति किंभूतोनि-यमः सावधिः अवधिसहवर्तमानः नेदं रजतमित्यु-त्तरकालेबाधदर्शनात् । एवं यावद्बाधादर्शनं तावदेव रजतादि भासते । अतएवास्य सत्यत्वं तद्वत्सत्यस्य सत्ये ब्रह्मणि इदमखिलं जगत् प्राविरासीत् । प्रा-

द्भूतं तदपि सावधित्वात्प्रातिभासिकमित्यर्थः । प्रकारांतरेण सत्यं दृढीकरोति—मिथ्येति । मिथ्याभूतं रजतादि येन प्रतीयते प्रतीतिविषयोभवति । तत्त्वल्विति निश्चयेन सत्यं वदंति ॥ ५७ ॥

**यत्राकाशावकाशःकलयतिचकलामा-**
**त्रतांयत्रकालोयत्रैवाशावसानंबृहदिह**
**हिविराट्पूर्वमर्वागिवास्ते ॥ सूत्रंयत्रा-**
**विरासीन्महदपिमहतस्तद्धिपूर्णाच्चपूर्णं**
**संपूर्णादर्णवादेरपिभवतियथापूर्णमेका-**
**र्णवांभः ॥ ५८ ॥**

अथ पूर्णं ब्रह्म दर्शयति—यत्रेति । अहो इत्याश्चर्ये तदद्भुन्महदपि स्थूलमपि विराट् पूर्वं ब्रह्म विराडिति पूर्वं उपलक्षणं यस्य एवं विधं विश्वरूपाख्यं अर्वागिवास्ते तत्किं यत्र यस्मिन्नाकाशावकाशः आकाशस्याप्यवस्थानं तथा यत्र कालः कलामात्रतां कलयति प्राप्नोति तथा यत्राकाशावस्थानं दिक्पर्यवस्थानं भवति एवंविधमपि अर्वागेवास्ति तथा तत्र सूत्रं आविरासीत् किंभूतं महतोपि विराजो-

पि महत् हिरण्यगर्भाख्यमित्यर्थः । एवंविधं यत् हीति निश्चयेन तदेव पूर्णात्पूर्णं ब्रह्म । अत्र दृष्टांतमाह—यथेति यथा स्वरूपेणैव पूर्णादर्णवादेः समुद्रादिपदार्थात् एकार्णवांभः एकीभूतं सप्तसमुद्रोदकं पूर्णात्पूर्णं तद्वत्प्रकृतेपीत्यर्थः । अत्रश्रुतिः— "पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदुच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते" । भाष्यं—एवं सावधिपूर्णं तदापेक्षिकं यथा नदीह्रदात्तडागः पूर्णः तडागात्समुद्रः तथा इदं मूर्तं पूर्णं तदपेक्षया अदः अमूर्तं पूर्णं तस्मादपि पूर्णमुच्यते उत्कर्षं प्राप्नोति तत्पूर्णस्य पूर्णं पूर्णत्वं आदाय अंगीकृत्य सन्मीलनेन एकीभावं प्राप्य पूर्णमेवावशिष्यते तदेव पूर्णात्पूर्णं अनतिशयंपूर्णमित्यर्थः ॥ ५८ ॥

अंतःसर्वौषधीनांपृथगमितरसैर्गंधवीर्यैर्विपाकैरेकंपाथोदपाथःपरिणमतियथातद्वदेवांतरात्मा॥नानाभूतस्वभावैर्वहतिवसुमतीयेनविश्वंपयोदावर्षत्युच्चैर्हुताशःपचतिदहतिवायेनसर्वांतरोसौ ५९

अथ सर्वांतरं ब्रह्माह—स्पष्टार्थमिदं पद्यम् । श्रुतिरपि—

"यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदेत्यादि-
का" ॥ ५९ ॥

भूतेष्वात्मानमात्मन्यनुगतमखिलंभूतजातंप्रपश्येत्प्रायःपाथस्तरंगान्वयवदथ चिरंसर्वमात्मैवपश्येत् ॥ एकंब्रह्माद्वितीयंश्रुतिशिरसिमतंनेहनानास्तिकिंचिन्मृत्योराप्नोतिमृत्युंसइहजगदिदंयस्तुनानेव पश्येत् ॥ ६० ॥

अथ ब्रह्मणएकत्वे मूलश्रुतिसहकारिणीमीशावास्योपनिषच्छ्रुतिं संवादयन्नाह—भूतेष्विति । भूतेषु बहुषु आत्मानं एकं पश्येत् तथा एकस्मिन्नात्मनि अखिलं समग्रं भूतजातं प्रायः बाहुल्येन चिरकालं प्रपश्येत् किमिव पाथस्तरंगान्वयवत् पाथश्च तरंगाश्च तेषामन्वयः संबंधः तद्वत् । अथैकस्मिन्नुदके सहस्रशस्तरंगाः दृश्यंते तथा सर्वेषु तरंगेषु एकं जलमेव दृश्यते नान्यत् किंचित्पदार्थांतरं अनुभूयतइत्यर्थः । एवमेतैरुक्तप्रकारैः एकमद्वितीयं ब्रह्मैव श्रुतिभिरभिहितंनिरूपितं परंतु इह किंचिन्नाना नाम न विद्यते वस्तुतस्तु नाना भवति परंतु यः नानेव पश्येत्समृत्योर्देहाहंकाराभिनिवेशात्पुनर्मृ-

त्युमेवाप्नोति।श्रुतिरपि—"यस्तुसर्वाणि भूतान्यात्मन्येवानु-
पश्यति । सर्वभूतेषुचात्मानंततोनविचिकित्सते"॥ उत्तमा-
धमभावेन तारतम्यं करोति यः । तथा मृत्योः समृत्यु-
माप्नोति यइह मानेन पश्यति ॥ ६० ॥

प्राक्पश्चादस्तिकुंभाद्गगनमिदमितिप्र-
त्ययेसत्यपीदंकुंभोत्पत्तावुदेतिप्रलयमुप-
गतेनश्यतीत्यन्यदेशम् ॥ नीतेकुंभेनसाकं
व्रजतिभजतिवातत्प्रमाणानुकारावित्थं
मिथ्याप्रतीतिःस्फुरतितनुभृतांविश्वतस्त-
द्वदात्मा ॥ ६१ ॥

अथोक्तं प्रमेयं दृष्टांतेन दृढीकुर्वन्नाह—प्रागिति ।
इदं गगनमाकाशः कुंभात्सकाशात्प्राक् पश्चादस्ती-
ति प्रत्यये सत्यपि तनुभृतां इत्थमितिप्रकारैर्मि-
थ्याप्रतीतिः स्फुरति । अथ तदेवाह—इदं घटाव-
च्छिन्नं गगनं घटोत्पत्तौ सत्यां उदेति उत्पद्यते-
तथैव घटे प्रलयं नाशमुपगते घटाकाशोनश्यति
तथा कुंभे अन्यदेशं प्रदेशांतरं नीते सति गगनमपि
कुंभेन साकं व्रजति तत्प्रमाणानुकारं भजति लघी-

यसि महति च घटे तत्प्रमाणं भवति । यथा दीर्घे वक्रे निम्ने वा घटे तत्तदाकारं तद्वत् विश्वतश्चराचरात्प्राक् पश्चादात्मा वर्ततइति ज्ञात्वापि पूर्ववत्तत्रापि स्थानकल्पनं भ्रांतमेवेत्यर्थः ॥ ६१ ॥

यावान्पिंडोगुडस्यस्फुरतिमधुरिमैवास्ति सर्वोपितावान्यावान्कर्पूरपिंडःपरिणमतिसदामोदएवात्रतावान् ॥ विश्वंयावद्विभातिद्रुमनगनगरारामचैत्याभिरामंतावच्चैतन्यमेकंप्रविकसतियतस्तत्तदात्मावशेषम् ॥ ६२ ॥

अथ प्रकारान्तरेणापि ब्रह्मणः सर्वात्मकत्वमाह— यावत्पिंडइति । स्पष्टार्थमिदंपद्यम् । ॥ ६२ ॥

बाद्यान्नादानुभूतिर्यदपितदपिसानूनमाघातगम्याबाद्याघातध्वनीनांपृथगनुभवतःकिंतुतत्साहचर्यात् ॥ मायोपादानमेतत्सहचरितमिवब्रह्मणाभातितद्वत्स्मिन्प्रत्यक्प्रतीतेनकिमपिविषयीभावमाप्नोतियस्मात् ॥ ६३ ॥

अथ पुनरपि ब्रह्मणः सर्वात्मकत्वमाह— वाद्यादि- ति । यद्यपि वाद्यात्सकाशान्नादानुभूतिर्भवति तद- पि तथापि सा नादानुभूतिः आघातगम्या आघा- तव्यतिरेकेण नोत्पद्यते आघातइत्युपलक्षणं क्वचि- दाघातेन क्वचिद्वादनेन क्वचिद्वायोरास्फुरणेन नादानु- भूतिर्भवति किंतु साहचर्यादेकसमयावच्छेदेन भवतीति प्रत्यक्षसिद्धं तद्वदेतन्मायोपादानं विश्वं ब्रह्मणा साकं सहचरितमेवाभाति । अत्र श्रुतिः— " यथादुंदुभेर्हन्यमानस्यनबाह्यांच्छब्दाञ्छक्नुयाद्ग्रहणा- यदुंदुभेर्ग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः" भाष्यं— यथा हन्यमानस्य दुंदुभेर्बाह्यान्पृथक् स्थितान् श- ब्दान् ग्रहणाय गृहीतुं न शक्नुयात् । किंतु दुंदु- भेर्ग्रहणेन ज्ञानेन सह दुंदुभ्याघातस्य साहचर्येण शब्दोगृहीतः ॥ ६३ ॥

दृष्टःसाक्षादिदानीमिहखलुजगतामीश्व- रःसंविदात्माविज्ञानस्थाणुरेकोगगनव- दभितःसर्वभूतांतरात्मा ॥ दृष्टंब्रह्मातिरि- क्तंसकलमिदमसद्रूपमाभासमात्रंशुद्धं ब्रह्माहमस्मीत्यविरतमधुनात्रैवतिष्ठद- नीहः ॥ ६४ ॥

अथनिरूपितप्रमेयस्य पर्यवसितमर्थमाह—दृष्टइति । स्पष्टार्थः विज्ञानकोशप्रकरणंसमाप्तम् ॥ ६४ ॥

इंद्रेन्द्राण्योःप्रकामंसुरतसुखजुषोःस्याद्र-तान्तःसुषुप्तिस्तस्यामानंदसांद्रं पदमतिग-हनंयत्सआनंदकोशः ॥ तस्मिन्नोवेद किंचिन्निरतिशयसुखाभ्यंतरेलीयमा-नोदुःखीस्याद्बोधितःसन्निति कुशलमति-र्बोधयेन्नैवसुप्तम् ॥ ६५ ॥

अथानंदकोशोव्याख्यायते । तत्रानंदस्वरूपस्य ब्रह्म-णोभिव्यक्तिः सुषुप्तौ भवतीति सुषुप्तिस्वरूपमाह— इंद्रेन्द्राण्योरिति । इंद्रश्च इंद्राणी च तयोः प्रकामं स्वेच्छया सुरतसुखमभिलषतोः योरतान्तः सुरतसमा-प्तिः सा सुषुप्तिः यथा लोके शुक्रद्रावोपलक्षित सुरतांते सुखाविर्भावोभवति तथैवेंद्रेंद्राण्योः सुषुप्तौ सुखाविर्भावोभवति । तत्रेंद्रोनाम दक्षिणेक्षिणपुरुषः तथा वामनेत्रस्थं अर्थप्रकाशकं ज्योतिः सेंद्राणी तयोर्जाग्रत्यां भ्रूमध्येवस्थाने स्वापकाले तस्मादवरुह्य हृदयाकाशे पुरीततिस्थाने तिष्ठतोस्तयोः सुरतप्रसंगः

स्वप्नावस्था सुरतांतः सुषुप्तिः तस्यां यदानंदसांद्रं पदं स्थानं सएवानंदकोशः तस्मिन्सुषुप्त्युपलक्षित- आनंदकोशे जीवः किंचिन्न वेद न जानाति कु- तइत्यतआह निरतिशयसुखाभ्यंतरे लीयमानः न विद्यते अतिशयोयस्मात्तन्निरतिशयं सुखं परमानंदः तत्र लीयमानोलुप्ताहंकारत्वात् । अथ तस्य सुख- स्य निरतिशयत्वं प्रकटयन्नाह । दुःखीस्यादिति— यतोबोधितः बलात्कारेण जाग्रद्दशायां प्रापितः सन् दुःखी भवति दुःखं प्राप्नोति । भोजनादिविषयसु- खप्राप्त्यर्थं अपि बोधितः दुःखमाप्नोति तस्माद्विष- यसुखापेक्षया आत्मसुखमेव निरतिशयमित्यर्थः यस्मादेवं तस्मात्कारणात्कुशलमतिः ज्ञातापुरुषः सुप्तं सुषुप्त्यवस्थं पुरुषं नैवबोधयेत् निद्राभंगं न कुर्यात् श्रुत्युक्तप्रत्यवायश्रवणात् एवमिंदेंद्राणीसुरतविषये जं- गन्मिथ्यात्वप्रकरणे बह्व्यः शतपथश्रुतयः संभाष्यस- म्यगुदाहृताभवंति । अथ स्वप्नसुषुप्तिविषयिणी श्रु- तिः—"अथ हैतत्पुरुषः स्वपिति नामगृहीतएव प्राणोभवति गृहीता वाक्गृहीतंचक्षुःगृहीतंश्रोत्रंगृही- तंमनः सयत्रैतत्स्वप्नयाचरतितेहास्यलोकास्तदुभेवमहा- राजोभवति उतेवमहाब्राह्मणः उतेवोच्चावचंनिगच्छ-

तिसयथाकामंपरिवर्तते ।" भाष्यं—हइति यदा एतदयं पुरुषः स्वपिति निद्रां करोति तदा प्राणः क्षुत्पिपासाप्रवर्तकः गृहीतआकर्षितएव भवति वाक्चक्षुः श्रोत्रमपि गृहीतं भवति स्वस्वविषयग्रहणाशक्तत्वात् । तथा संकल्पात्मकं मनोपि गृहीतं अथेत्यनंतरं एतदयं जीवः स्वमया स्वप्नावस्थया चरति हइति निश्चयेन अस्य ते लोकाः क्रीडास्थानानि तदुतेव तत्क्षणएव महाराजोभवति । तथा तदुतेव तत्क्षणादेव महाब्राह्मणः श्रोत्रियोभवति उतेवोच्चावचं उच्चापकृष्टयोनिं निगच्छति । अथ दृष्टांतमाह—यथा महाराजः जानपदान्स्वप्रजाः गृहीत्वा आक्रम्य स्वजनपदे प्राप्तसाम्राज्ये यथा कामं यथेच्छं परिवर्तते व्यापारं करोति एवमेव एषजीवः प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते तथा—"अथयदानकस्यचनवेदहितानामनाड्योद्वासप्ततिसहस्राणिहृदयात्पुरीततिमभिप्रतिष्ठंतेताभिःप्रत्यवसृप्यपुरीततिशेते । सयथाकुमारोवामहाब्राह्मणोवाऽतिघ्नीमानंदस्यगत्वाशयीतैवमेवैषतच्छेते" । भाष्यं—अथस्वमावस्थातिक्रमादनंतरं यदा सुषुप्तः सुषुप्त्यवस्थांप्राप्तो भवति अथ तदुपलक्षणमाह—यदेति । यदा न

कस्यचन वेद कस्यापि किंचिदपि न जानाति तदा हिताः सुखकारिण्योद्वासप्ततिसहस्रानाड्यः हृदयात्सकाशात् अभिसमंततः पुरीततिमेकांतस्थलं तस्मादभितः प्रतिष्ठंते आवृत्य स्थिताः भवंति ताभिर्नाडीभिः प्रत्यवसृत्यआवरणं विधाय पुरीतति एकांतस्थले शेते निश्चेष्टतया तिष्ठति । यथा कुमारोबालः महाब्राह्मणः श्रोत्रियोवा अतिघ्नीं स्थूलसूक्ष्मप्रपंचनाशकर्त्रीं आनंदस्य पदवीं गत्वा शयीतैवं अनेन सर्वेषां जीवानां सुषुप्तिसुखे तारतम्यं नास्तीति सूचितं । एवमेवोक्तप्रकारेण पुरीततिशेते ॥ ६५ ॥

सर्वेनंदंतिजीवाअधिगतयशसागृह्य-
ताचक्षुरादीनंतःसर्वोपकर्त्रांबहिरपिच
सुषुप्तौयथातुल्यसंस्थाः॥ एतेषांकिल्विब-
षस्पृक्जठरभृतिकृतेयोबहिर्वृत्तिरास्तेत्व-
क्चक्षुःश्रोत्रनासारसनवशमितोयाति
शोकंचमोहम् ॥ ६६॥

अथास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—सर्वइति। अधिगतेन प्राप्तेन यशसा ब्रह्मणा कं-

त्वा सर्वे जीवाः नंदंति परमसुखं प्राप्नुवंति आत्मसाक्षात्कारे वर्णाश्रमादयः प्रयोजकान भवंति किंभूतेन ब्रह्मणा चक्षुरादीनंतर्गृह्णता आक्रमता पुनः किंभूतेन बहिरपि च सर्वोपकर्त्रा इंद्रियद्वाराविषयभोगदानेनारादुपकारकेण किंभूताः जीवाः तुल्यसंस्थाः आत्मप्राप्तौ तुल्या संस्था संस्थानं येषां ते जातिप्रयुक्ततारतम्यवर्जिताइत्यर्थः अत्र दृष्टांतमाह—सुषुप्ताविति । सुषुप्तौ यथात्माकारांतःकरणवृत्तौ सत्यां सकलजीवानां सुखतारतम्यं नास्ति तद्वदात्मप्रतीतावपि । अथैतेषां जीवानां मध्ये यः जठरभृतिकृते अन्नादिविषयभोगार्थं बहिर्वृत्तिरास्ते सकिल्बिषं दुःखं स्पृशति सतथा अथैतदेव प्रकटयन्नाह--त्वगित्यादि । त्वक्चक्षुःश्रोत्रनासारसनवशमितः इंद्रियाधीनत्वं प्राप्तः सन् शोकं मोहं च यांति विषयाप्राप्तौ शोकप्राप्तौ च मोहमित्यर्थः । श्रुतिः—"सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः । किल्बिषस्पृक्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय" ॥

अत्रप्रथममाचार्याभिमतमध्यात्मरीत्यारावणभाष्यं — "न तस्य प्रतिमास्ति यस्य नाममहद्यशइतिश्रुतेः" । यशसा परमात्मना आगतेन प्राप्तेन सर्वे जीवाः

नंदंति परमानंदं प्राप्नुवंति तथा नृपशुपक्षिप्र-भृतयः सर्वे जीवाः सुषुप्तिसमये परमसुखिनोभवंति तद्वदात्मप्राप्तावित्यर्थः । किंभूतेन यशसा सभासा-हेन सभांस्तेजोरूपानर्थप्रकाशकान् चक्षुरादीन्सहते आक्रमते सतथा । "गृहीतावाक्गृहीतंचक्षुरितिश्रु-तेः" पुनः कथंभूतेन सख्या उपकारकेणापि वि-षयभोगनिमित्तत्वेनेत्यर्थः । किंभूताः जीवाः सखा-यः समानज्ञानाः सदृशसुखानुभवाः अथैषां जीवा-नां मध्ये यः पितुषणिः पितुरित्यन्ननाम पितुः सुनोति सः पितुषणिः केवलमुदरंभरः सकिल्बिष-स्पृक् दुःखभागी भवति । हि यस्मात्कारणात् अ-रमत्यर्थं वाजिनाय इंद्रियवीर्याय हितः तत्परोभव-ति । अथैतदुक्तं भवति सुखशब्दव्यपदेश्यं आत्म-सुखमेव सुखं इंद्रियसुखं तु दुःखपक्षांतर्भूतमित्य-र्थः ॥ अथाधिदैवरीत्या सायणभाष्यकारः—सर्वे नं-दंति सखायः समानाख्यानाः समानज्ञानाः सर्वे म-नुष्याः सभ्याः सभासाहेन सभां सोढुं शक्नुवता सख्या ऋत्विजा प्रतिभूतेन यज्ञं प्रत्यागतेन यशसा यशस्विना सोमेन हेतुना नंदंति हृष्टाः भवंति सहि सएव सोनएषां जनानां किल्बिषस्पृक् यः स्वस्मा-

दन्यः पुरुषः श्रेष्ठतामश्नुते सकिल्बिषं भवति वा ध्यत्वेन यथा पापं सदाचारैर्बाधितव्यं भवति तद्व-त्पापरूपस्य शत्रोर्बाधकः यद्वा यज्ञे साध्वनुप्रवच-नाकरणेन यत्किंचित्किल्बिषमेषां ज्ञायते तं योबाधते सकिल्बिषस्पृक् यथा त्वं पितुषणिः पितुरित्यन्न-नाम दक्षिणावातमनेन सोमेनसुनोति यजमानः । किंच हितः पात्रेषु निहितः सोमः वाजिनाय इं-द्रियवीर्याय तत्कतुमरमलं पर्याप्तं समर्थोभवति ॥ ६६ ॥

जागृत्यामंतरात्माविषयसुखकृतेनेकय-त्नान्विधास्यन्श्राम्यत्सर्वेंद्रियौघोधिगत-मंपिसुखंविस्मरन्यातिनिद्राम् ॥ विश्रा-मायस्वरूपेत्वतितरसुलभंतेनचातींद्रियं हिसौख्यंसर्वोत्तमंस्यात्परिणतिविरसादिं-द्रियोत्थात्सुखाच्च ॥ ६७ ॥

अथ परमानंदापेक्षया क्षुद्रानंदानां अतितुच्छत्वं अस्तीत्यनुभवैकसिद्धत्वेन निरूपयति—जाग्रत्यां जा-ग्रदवस्थायां अंतरात्मा जीवः विषयसुखनिमित्तं अनेकयत्नान्विधास्यन् करिष्यन् वर्तते तत्र विद्वान् देशपर्यटनात् दुःशीलप्रभुसमर्जनात् शूरस्तुसंग्रामादि-

ना प्राणसमर्पणात् चोरस्तुदेहहिंसापर्यवसन्नकर्मकरणात्तथैव गारुडादिविद्योपजीविनः एवं सर्वोपि जनः स्वस्वोद्यमानतिक्रमेण विषयसुखाय यतते तत्र श्राम्यत्सर्वेंद्रियौघः शिथिलीभूतकरचरणवाग्व्यापारः पुमान् विधिवशात् प्राप्तमपिविषयं विस्मरन् विश्रामाय हृद्याकाशावस्थिते स्वात्मरूपे क्षणं निद्रां याति अप्राप्ते विषये समुद्विग्नस्य विश्रांत्यै निद्रैव शरणमित्यर्थः । तेन कारणेन इंद्रियोत्थात्सुखात् अंतीद्रियसुखं सर्वोत्तमं सर्वापेक्षया श्रेष्ठतमं । तथा च अतितरसुलभं विषयसुखप्रयासापेक्षयाऽल्पप्रयाससाध्यमित्यर्थः । अथातिप्रयाससाध्यं किमपिविषयसुखं क्षणभंगुरमंते च विरसमित्याह किंभूतादिंद्रियसुखात्परिणतिविरसात् परिणामे दुःखप्रदात् ॥ ६७॥

पक्षावभ्यस्यपक्षीजनयतिमरुतंतेनयात्युच्चदेशंलब्ध्वावायुंमहांतंश्रममपनयतिस्वीयपक्षौप्रसार्य ॥ दुःसंकल्पैर्विकल्पैर्विषयमनुकदर्थीकृतंचित्तमेतत्खिन्नं विश्रामहेतोःस्वपितिचिरमहोहस्तपादान्प्रसार्य॥ ६८॥

अथात्र श्रुत्युक्तं दृष्टांतमुपन्यसन् उक्तार्थमेव दृढी- कुर्वन्नाह—पक्षाविति । पक्षी पक्षावभ्यस्य व्यापार- यित्वा मरुतं वायुं उत्पादयति तेन वायुनोच्चदेशं या- ति तत्रोच्चैस्तरामाकाशदेशे महांतं वायुं लब्ध्वा पक्षौ प्रसार्य प्राक्तनं श्रममपनयति त्यजति एवं प्रकृते दुः- संकल्पैस्तद्विपरीतैर्विकल्पैश्चविषयमनुलक्षीकृत्य एत- च्चित्तं कदर्थीकृतं ततः खिन्नं सत् हस्तपादान् प्रसार्य विश्रामहेतोश्चिरं स्वपिति अत्रश्रुतिः— "तद्यथास्मिन्ना- काशेश्येनोवासुपर्णोवाविपरिपत्यश्रांतःसंहत्यपक्षौसंल- यायध्रियतएवमेवायंपुरुषःएतस्मादंतायधावतियत्रसु - प्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यति" । भाष्यं— यथायद्वदस्मिन् दृक्प्रसारोपलक्षितआकाशे श्येनः प- क्षिकुलनिहंता पतत्रिविशेषः सुपर्णोगृध्रादिर्विपरिपत्य उच्चैरुत्प्लुत्य तत्र शांतः सन् पक्षौ संहत्य प्रसार्य संलयाय विश्रांतये ध्रियते प्रयत्नं करोति एवमेवायंपुरुषए- तस्माज्जाग्रतिप्रयासात् अंताय उपरमाय धावति। तूर्णं स्वमूलमाश्रयते तत्र सुप्तः सन् जाग्रद्दशावन्न कंचन कामंविषयोद्देशेनेच्छां च करोति न वा स्वप्नं पश्यति । अथ हस्तपादान्प्रसार्येत्यत्र तथाबोधितः सन्दुःखीस्यादित्यत्र च श्रुतिः—"तंनायतंबोधयेदित्याहु

रिति ” । भाष्यं–तस्मात्कारणादायतं विस्तारितहस्तपादाद्यं प्रसुप्तं न बोधयेत् जागरं प्रापयेत् इति श्रूयते इतिआहुः । तथा चोक्तमग्निरहस्ये दशमकांडे–“तस्मादुहस्वपंतं धुरेव न बोधयेत् नैतदेवतेमिथुनीभवंत्यौ न हिनसानीति” । भाष्यं–तस्मात्कारणात् उह नियमेन स्वपंतं पुरुषं धुरेव सहसा न बोधयेत् एत देव ते इंद्रेंद्राण्यौ मिथुनीभवंत्यौ सुरतसुखासक्तौ न हिनसानीति नहन्मीति मत्वा न बोधयेदित्यर्थः। अनया निद्राभंगकर्तुः प्रत्यवायोपि दर्शितः ॥ ६८ ॥

**आश्लिष्यात्मानमात्मानकिमपिसहसैवांतरंवेदबाह्यंयद्वत्कामीविदेशात्सदनमुपगतोगाढमाश्लिष्यकांताम्॥ यात्यस्तं तत्रलोकव्यवहृतिरखिलापुण्यपापानुबंधःशोकोमोहोभयंवासमविषममिदं नस्मरत्येवकिंचित्॥ ६९॥**

अथ सुप्तेः परिणामावस्थामाह–आश्लिष्येति । आत्मा जीवः आत्मानं परमात्मानं सहसा अकस्मात् आश्लिष्य आलिंग्य एकीभूय किमप्यांतरं सूक्ष्मदेहा-

नुभूतं स्वप्नं बाह्यं स्थूलदेहानुभूतं च न वेद न जानाति। सर्ववृत्तीनां लीनत्वात्। अथात्र दृष्टांतमाह—यद्वदिति। यद्वद्विदेशात्परदेशात्सकाशात्सदनं स्वगृहं उपगतः कामी चिरकालं प्रोषितत्वात्कामातुरः कांतां कमनीयां स्त्रियं गाढमत्यौत्कंठ्येन आश्लिष्य आलिंग्य बाह्यमांतरं वा किमपि विषयांतरं न वेद तद्वदित्यर्थः। अत्रश्रुतिः— "तद्वाअस्यैतदात्मकाममाप्तकामंरूपं एवमेवायंपुरुषः प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरं। तद्य-थाप्रियया स्त्रियासंपरिष्वक्तोबाह्यंकिंचनवेदनांतरं"। भाष्यं—पूर्वश्रुतौ योस्य परमोलोकोथ यत्र सुप्तौ न कं-चन कामं कामयतइत्याद्युक्तं तद्वा एतस्य सुषुप्त्यव-स्थां प्राप्तस्य पुरुषस्य रूपं प्रथमतः आत्मकामं आ-त्मसुखान्यसुखनिरपेक्षं आप्तकामं सुखप्राप्ताववाप्तस-कलकामं ततः अकाममस्तमितकामं भवति एवं शा-रीरः शरीरावच्छिन्नः परमात्मा प्राज्ञेन जीवात्मनाप रिष्वक्तः आश्लिष्टः सन्न वेद किंचन नांतरं बाह्यं वा। अत्र दृष्टांतमाह—तद्यथेति। प्रियया प्रेमास्पदीभूतया स्त्रिया परिष्वक्तः पुमानिति स्पष्टम्॥ ६९॥

**अल्पानल्पप्रपंचप्रलयउपरतिश्चेंद्रिया-णांसुखाप्तिर्जीवन्मुक्तौसुषुप्तौत्रितयम-**

पिसमंकिंतुतत्रास्तिभेदः ॥ प्राक्संस्का-
रात्प्रसुप्तःपुनरपिचपरावृत्तिमेतिप्रबुद्धो-
नश्यत्संस्कारजातोनसकिलपुनरावर्तते-
यश्चमुक्तः ॥ ७० ॥

इदानींमुक्तिसुप्त्योर्लक्षणसाम्येपि वैलक्षण्यं दर्शयति–अल्पानल्पेति। जीवन्मुक्तौ सुषुप्तौ च एतत्त्रितयं समं तुल्यं तत्किं त्रयं अल्पानल्पप्रपंचप्रलयः सूक्ष्मासूक्ष्मयोः प्रपंचयोः प्रलयः प्रकृष्टमात्यंतिकोलयः तथेंद्रियाणामुपरतिः परमोविलयः गृहीतएव प्राणोगृहीतावागित्यादिपूर्वमेवोक्तं। तथा सुखप्राप्तिः। एवं चेत्तर्हि सुषुप्तिरेव मुक्तिरास्तां नाम कथं पुनर्मुक्तिसाधनार्थं प्रयास इत्याशंक्याह–किंत्विति। किंतु तत्र सुषुप्तिमुक्त्योर्मध्ये भेदोस्ति तमेवाह–सुषुप्तः सुषुप्तिं प्राप्तः पुरुषः प्राक्संस्कारात्पुनरपि परावृत्तिं एति। तथा यश्च प्रबुद्धः प्रबोधं ज्ञानं प्राप्तोनिरंतरं मुक्तः सन् नश्यत्संस्कारजातः सन् पुनर्नावर्तते आवृत्तिं न प्राप्नोति। अयमर्थः–यद्यपि सुषुप्तौ सर्वप्रलयोभवति तथापि तस्यादैनंदिनत्वादाकस्मिकत्वाच्च प्राक् पूर्वं जायतिस्तदुत्पन्नाः संस्कारावीजरूपेण तिष्ठंति तैरात्मा जीवआश्लिष्टः पुनरावर्तते मु-

क्तौ तु शनैर्ज्ञानयोगात्सर्वसंस्कारनाशोभवति तेन न सपुनरावर्तते ॥ ७० ॥

आनंदान्यश्चसर्वाननुभवतिनृपःसर्वसं-
पत्समृद्धस्तस्यानंदःसएकःसखलुशतगु-
णःसंप्रतिष्ठःपितॄणाम् ॥ आदेवब्रह्मलो-
कंशतशतगुणितास्तेयदंतर्गताःस्युर्ब्रह्मा-
नंदःसएकोस्त्यथविषयसुखान्यस्यमा-
त्राभवंति ॥ ७१ ॥

अथ सकलसुखापेक्षया आत्मसुखस्य निरतिशयत्वं युक्त्या निरूपयति—आनंदानिति। यत्सर्वसंपत्समृद्धोनृपः सर्वानंदाननुभवति दरिद्राणामेकैकविषयप्राप्तावेकएवानंदोभवति मनागधिकानामानंदद्वयं एवमुत्तरोत्तरं यस्य यावतांविषयाणां प्राप्तिः तावंतस्तस्यानंदाभवंति। एवं सर्व विषयप्राप्तिर्नृपस्यास्त्यतस्तस्यसर्वानंदभोगः।तथा च सर्व विषयानंदाः यत्र एकीभवंति सएकोराज्ञआनंदः सखल्विति निर्धारणे शतगुणः सन् पितॄणामानंदः सएवमुत्तरोत्तरं देवलोकमारभ्य ब्रह्मलोकपर्यंतं शतगुणिताआनंदाभवंति ते सर्वेपि यदंतर्गताअंतर्भूताःस्युःसएकोब्रह्मानंदोस्ति।अथास्यब्रह्मानंदस्य विषयसुखानि पूर्वोक्तानि क्षुद्राः

मात्राः अंशाः भवंति यथात्मैवोपाधिवशेन पृथक् क्षुद्रत्वेन भासते तथैव परमानंदोपि विषयसुखाकारेणेत्यर्थः॥ अत्रश्रुतिः“—सयोमनुष्याणांराद्धःसमृद्धोभवति अन्येषांअधिपतिः सर्वैर्मानुष्यकैः कामैः संपन्नतमः मनुष्याणां परमानंदः अथयेशतंमनुष्याणामानंदाः सएकः पितॄणांजितलोकानामानंदइत्यादि।”तथा“—अथैषब्रह्मलोकःसम्राडिति हैनमुवाचैषास्यपरमासंपदेषोस्यपरमोलोकः एषोस्यपरमानंदः अथैतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीति” । भाष्यं—योमनुष्याणां मध्ये राद्धः सिद्धः साम्राज्यसमृद्धः प्राप्तसर्वविषयोभवति अन्येषां मनुष्याणामधिपतिः नियंता तथा सर्वैर्मानुष्यकैः मनुष्यप्रसिद्धैः कामैः प्रार्थनीपदार्थैः संपन्नतमः तस्य यआनंदः समनुष्याणां परमानंदः अथ ये शतं मनुष्याणामानंदाः सएकः पितॄणामानंदः जितः अर्वाक् लोको यैस्ते जितलोकास्तेषां पितॄणामित्यर्थः । एवमुत्तरोत्तरंकर्मदेवाद्यानंदाः स्युः । अथैषब्रह्मलोकप्राप्त्यवसानं यस्मिन्सब्रह्मइति हइति निश्चित्य एनं जनकं प्रति याज्ञवल्क्यइत्युवाच । इतीति किं भोसम्राट् जनक एषउक्तप्रकारेण आनंदः ब्रह्मलोकः ब्रह्मैव लोकः प्राप्तव्यस्थानं यस्मिन्सब्रह्मलोकः ।

अथास्य मुमुक्षोः पुरुषस्य एषा परमा उत्कृष्टा निरतिशया संपत्परमैश्वर्यं तथा एषपरमोलोकः पूर्वोक्तः तथा एषोस्य परमानंदः अथैतस्यैवेति अन्यानि आत्मबहिर्मुखानि भूतानि जीवजातानि एतस्य निरूपितस्य परमानंदस्य मात्रामेकदेशमुपजीवंति ये भूतानां क्षुद्रानंदास्ते परमानंदस्यैवांशाः परमानंदे क्षुद्रानंदानामंतर्भूतत्वात् ॥ ७१ ॥

यत्रानंदाश्चमोदाः प्रमदइतिमुदश्चासते सर्वएतेयत्राप्ताःसर्वकामाःस्युरखिलविरमात्केवलीभावआस्ते॥ मांतत्रानंदसांद्रेकृधिचिरममृतंसोमपीयूषपूर्णांधारामिंद्रायदेहीत्यपिनिगमगिरोभ्रूयुगांतर्गताय ॥ ७२॥

अत्रास्मिन्नर्थे ऋक्शाखीयां श्रुतिं संवादयन्नाह—यत्रेति । यत्र यस्मिन्परमानंदे सर्वानंदाः मनुष्यानंदास्तथापितृणामानंदाः आजानदेवानां एवमुत्तरोत्तरं सर्वे अपि आसते वर्तंते यथा यत्र यस्मिन्परमानंदे सर्वे कामाः सत्यलोकादिप्राप्तिरूपाः आप्ताः प्राप्ताः स्युः तथा यत्र अखिलविरमात्स्थूलसूक्ष्मप्रपंचविल-

यात्केवलीभावआस्ते भो सोम षोडशकलारूप हि-
रण्मयरूप मां जीवदशापन्नं तत्र सांद्रानंदे चिरं अ-
मृतं कृधि कुरुष्व तथा इंद्राय जीवात्मने पूर्णा-
पीयूषधारां देहि। मुक्तानां सोमचक्रादमृतद्रावोभव-
तीति योगशास्त्रे प्रसिद्धम्। किंभूताय इंद्रायभ्रूयुगां-
तर्गतायेति। एवमुक्तप्रमेयं निगमगिरः प्राहुः। अत्र
श्रुतिः सप्तमाष्टके—"यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते।
कामस्ययत्राप्ताः कामास्तत्रमाममृतंकृधींद्रायेंदोपरि
स्रव"। भाष्यं—कामस्य वासनारूपस्य मनसः कामाः
यत्राप्ताः प्राप्ताभवंति तत्र माममृतं कृधि तदेवाह—भो
इंदो चंद्ररूप परमात्मन् इंद्राय सकलेंद्रियनियंत्रे जी
वाय अमृतं परिस्रव॥ ७२॥

आत्माऽकंपःसुखात्मास्फुरतितदपरात्व-
न्यथैवस्फुरंतीस्थैर्यंवाचंचलत्वंमनसिप-
रिणतिंयातितत्रत्यमस्मिन्॥ चांचल्यंदुः-
खहेतुर्मनसइदमहोयावदिष्टार्थलब्धिस्त-
स्यांयावत्स्थिरत्वंमनसिविषयजंस्यात्सु-
खंतावदेव॥ ७३॥

नन्वतींद्रियं सुखं हि परमानंदः तथा विषयसुखं

इंद्रियजन्यं एवमुभयोर्महति वैषम्ये अनुभवसिद्धे सति कथमुक्तं एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीत्याशंक्य श्लोकद्वयेनोत्तरयति—आत्मेति। आत्मा तावदकंपः कंपरहितः तथा सुखात्मा सुखरूपोपि विज्ञानमानंदं ब्रह्मेति आत्मनआनंदरूपत्वं श्रुतिसिद्धं सुषुप्त्यवस्थायामनुभवसिद्धं चातः स्फुरतीत्युक्तं तथा तदपरा तद्विलक्षणा माया अन्यथा उक्ता तद्विपरीतस्वभावा सकंपा दुःखरूपा चात्मसहचरितैव स्फुरति । पूर्ववदनुभवसिद्धास्ति एवं तयोरात्ममाययोरनुगतं स्थैर्यं चंचलत्वं वा यस्मिन्मनसि परिणतिं परिणामं याति तस्य चिदचिद्ग्रंथिरूपत्वम् अहो इति संबुद्धौ यावदिष्टार्थलब्धिः अभीष्टविषयप्राप्तिस्तावत्प्रयत्नशताकुलस्य मनसश्चांचल्यमिदं दुःखहेतुर्भवति । अथ तस्यां विषयप्राप्तौ सत्यां कृतकृत्यत्वेन मनसि यावत्स्थिरत्वं तावदेव विषयजं सुखं स्यात् ॥ ७३ ॥

यद्वत्सौख्यंरतांतेनिमिषमिहमनस्येकता-
नेरसेस्यात्स्थैर्यंयावत्सुषुप्तौसुखमनति-
शयंतावदेवाथमुक्तौ॥ नित्यानंदःप्रशां-

तेल्हदितदिहसुखस्थैर्ययोःसाहचर्यंनित्या-
नंदस्यमात्राविषयसुखमिदंयुज्यतेतेनवक्तुम् ॥ ७४ ॥

अथात्र द्वितीयश्लोकेन दृष्टांतद्वयमाह—यद्वदिति । यथा इहास्मिन्ननुभवसिद्धे रतांते श्रृंगाररसेन मनस्येकताने एकाग्रे सति निमिषं निमिषमात्रं सौख्यं भवति तथा सुषुप्तौ मनसि यावत्स्थैर्यं तावदेवानतिशयसुखं अथ मुक्तावपि ह्रदि प्रशांते सति नित्यानंदोभवति । तत्तस्मात्कारणादिह सुखस्थैर्ययोः साहचर्यं सहचरितत्वमनुभवसिद्धं तेन कारणेन इदं विषयसुखं नित्यानंदस्य मात्रेति वक्तुं युज्यते । इत्यानंदकोशप्रकरणम् ॥ ७४ ॥

श्रांतंस्वांतंसबाह्यव्यवहृतिभिरिदंताःसमाकृष्यसर्वास्तत्तत्संस्कारयुक्तंव्युपरमतिपरावृत्तिमिच्छन्निदानम् ॥ स्वाप्नान्संस्कारजातप्रजनितविषयान्स्वाप्नदेहेनुभूतान् प्रोत्स्यांतःप्रत्यगात्मप्रवणमिदमगाद्भूरिविश्राममस्मिन् ॥ ७५ ॥

अथ जगन्मिथ्यात्वप्रकरणमुच्यते । तत्र प्रपंचमिथ्यात्वे प्रथमतः स्वप्नदशानिदर्शनेन दर्शयन् स्वप्नरूपं निरूपयति—श्रांतमिति । इदं स्वांतं मनः बाह्यव्यवहृतिभिः स्त्रीपुत्रादिपोषणप्रभृतिभिः श्रांतं सत् उपरमति विरमति विरतव्यापारं भवति किंकृत्वा ताः सर्वाबाह्येंद्रियार्थस्य व्यवहृतीः समाकृष्य यद्वा इदं ताः इंद्रियैः कृत्वा इदंताकारेण भासमानाः विषयास्तान् अंतः समाकृष्य एवं यद्यपि बाह्यव्यवहारस्त्यक्तः तथापि दृढानुसंधानोत्पन्नतत्तत्संस्कारयुक्तं सत्पराहृत्तं अथ किमुद्दिश्य पराहृत्तमित्याशंक्याह निदानं इच्छन् निदानं स्वीयमादिकारणं आत्मरूपं इच्छन् यथा बहुदेशाटनैः खिन्नः पांथोविश्रांत्यै स्वगेहागमनमिच्छति तद्वदित्यर्थः । अत्र श्रुतिः— " अथहैतत्पुरुषःस्वपितिनामतद्गृहीतएवप्राणोभवतिगृहीतावाक्गृहीतंचक्षुःगृहीतंश्रोत्रंगृहीतंमनइति"।ततःस्मरणाधिरूढसंस्कारजातेनप्रजनितविषयान्स्वामान्सूक्ष्मदेहानुभूतान्प्रोत्स्यत्यक्त्वाप्रत्यगात्मप्रवणंपरमात्मसंयोगोन्मुखं तदस्मिन्नात्मनि विश्रामं विश्रांतिमगादगच्छत् । यथा महद्रूपदर्शनाय कश्चित्प्रवृत्तः सामंतोबहिर्द्वारि

सेनासन्नाहं त्यक्त्वा द्वित्रैः पार्षदैः सह प्रविशति तथां
तद्द्वारि तानपि त्यक्त्वा केवलरूपेणैव समक्षं गच्छति
तद्वदित्यर्थः। अनेन मनसः प्रथमतः सुषुप्तिरेवोद्दिष्टा स्व
मावस्था तु विधिवशादांतरालिकैवोत्पन्नेत्युक्तम् ॥७५॥

स्वप्नेभोगःसुखादेर्भवतिननुकुतःसाधने
मूर्छमानेस्वाप्नंदेहांतरंतद्व्यवहृतिकुशलं
नव्यमुत्पद्यतेचेत् ॥तत्सामग्र्याअभावा-
त्कुतइदमुदितंतद्धिसांकल्पितंचेत्तर्हि
स्वाप्नेरतांतवपुषिनिपतितेदृश्यतेशुक्रमो-
क्षः॥ ७६ ॥

अथ पूर्वपक्षमुद्घाट्य दृढीकुर्वन् श्लोकमाह—स्वप्नइति।
नन्वित्याशंकते साधने भोगसाधने स्थूलशरीरे ज्ञान-
कर्मेंद्रियैः संमूर्छमाने निश्चेष्टतया पतिते सति
स्वप्ने स्वप्नावस्थायां सुखादेः सुखदुःखसाधकविषय-
भोगः कुतः कस्माद्भवतीति अथ चेदेवं ब्रूषे स्वाप्नं
स्वप्नसंबंधि देहांतरं तद्व्यवहृतिकुशलं स्वाप्नविषयभो-
गकुशलं नव्यं नवीनं उत्पद्यते तेन स्वाप्नव्यवहारो-
स्तु किंप्राक्तनेन शरीरेणेति । तदपि दूषयति—तदि-

ति तत्सामग्र्याः तस्य स्वाप्नदेहस्य या सामग्री पित्रोः शुक्रशोणितरूपा तस्याः अभावात् । कुतः कस्मात् सामग्र्यंतरादिदमुदितं उत्पन्नं असद्रूपं भूतावेशन्यायेनोत्पन्नमिति चेन्न स्वाप्ने रतांते स्वाप्नस्त्रीभोगांते शुक्रद्रावः स्वाप्नशरीरएवास्तु सनिपतिते व पुषि निश्चेष्टे स्थूलशरीरे किमिति दृश्यते । मृषारूपस्य देहस्य सुरतांतोपि मृषैवास्तु सुरतानामभिव्यंजकः शुक्रद्रावः प्रातः सत्यत्वेन कथमुपलभ्यते इत्यर्थः ॥ ७६ ॥

भीत्यारोदित्यनेनप्रवदतिहसतिश्लाघतेनूनमस्मात्स्वप्नेप्यंगेनुबंधंत्यजतिनसहसामूर्छितोप्यंतरात्मा॥पूर्वंयेयेनुभूतास्तनुयुवतिहयव्याघ्रदेशादयोर्थास्तत्संस्कारस्वरूपान्सृजतिपुनरमून्श्रित्यसंस्कारदेहम्॥७७॥

दूषणांतरमाह—भीत्येति । स्वाप्नोत्पन्नया दस्युव्याघ्रादिभीत्या अनेन स्थूलदेहेन कृत्वैव रोदिति साट्टहासं रोदनं करोति न स्वाप्नशरीरेणेत्यर्थः । न केवलं रोदिति

अनेनैव प्रवदति यत्किंचिज्जल्पति तथा हसति श्लाघ-
ते अहंकृतार्थइति। एवं पूर्वपक्षमनूद्य प्रागुक्तं पर्यवसि-
तमर्थमाह– नूनमिति । नूनं निश्चयेन अस्माद्धेतोः
अंतरात्मा स्वप्नेपि अंगे स्थूलदेहे मूर्छितेपि सहसा अ-
नुबंधं संबंधं न त्यजति । अथ सोनुबंधः पूर्वं त्वयैव
निराकृतः कथमिदानीमनुबंधः प्रोच्यते इत्याशंक्या-
ह– पूर्वमिति पूर्वंअनादिजाग्रदवस्थासु येये अर्थाः
अनुभूताः ते के तनुयुवतिहयव्याघ्रदेशादयः तनुः शरी-
रं युवतिः स्त्री स्वकीया परकीया वा हयोश्वः प्रया-
णनिमित्तं व्याघ्रोभयनिमित्तं देशः काश्यादिप्रदेशः
आदिशब्दादन्येपि विषयास्तेषां पूर्वमनुभूतानां यः
संस्कारः सएव रूपं स्वरूपं एषां ते तथाविधानमून्
शरीरादिविषयान् तदनुरूपानेव पुनः सृजति तएव
विषयाः संस्काररूपत्वेन आभासंतइत्यर्थः । अथांत-
रात्मा किंसृजतीत्याह–संस्कारदेहं लिंगदेहं श्रित्य
अधिष्ठाय तस्मिन् देहे सर्वेसंस्काराः उद्बुद्धाः संतः तत्त-
द्विषयाकारेण परिणमंतीत्यर्थः ॥ ७७ ॥

संधौजाग्रत्सुषुप्त्योरनुभवविदितास्वा-
प्न्यवस्थाद्वितीयातत्रात्मज्योतिरास्तेपुरु-

षइहसमाकृष्यसर्वेंद्रियाणि ॥ संवेश्यस्थूलदेहंसमुचितशयनेस्वीयभासांतरात्मापश्यन्संस्काररूपानभिमतविषयान्यातिकुत्रापितद्वत् ॥ ७८ ॥

अथ श्रुत्यर्थानुरूपामुक्तार्थप्रक्रियां निरूपयति—संधाविति जाग्रत्सुषुप्त्योरवस्थयोः संधौ अनुभवसिद्धा स्वामी द्वितीयावस्था तत्र तस्यां अवस्थायां इह स्वरूपे सर्वेंद्रियाणि समाकृष्य पुरुषोंतरात्मा आत्मज्योतिरास्ते। इंद्रियाभावात् तस्यां अवस्थायां यद्विषयग्रहणं तदात्मज्योतिषैव संपादयतीत्यर्थः । ननु तदा स्थूलदेहस्य का गतिरित्यतआह—स्थूलदेहं समुचितशयने यथाप्राप्तनिद्रास्थले निवेश्य प्रसारितहस्तपादं संवेश्य तथा स्वीयभासास्वसामर्थ्येन स्वप्नदेहसंस्काररूपसमुचितेंद्रियगणान्निर्माय यत्र कुत्राप्यभीष्टस्थाने तद्वत्संस्काररूपेणैवयाति विचरति ॥ ७८ ॥

रक्षन्प्राणैःकुलायंनिजशयनगतंश्वासमात्रावशेषैर्माभूत्तन्मृतकल्पाकृतकमितिपुनःसारमेयादिभक्ष्यम् ॥ स्वप्नेस्वीयप्र-

भावात्सृजतिहयरथान्निम्नगाःपल्वला-
निक्रीडास्थानान्यनेकान्यपिसुहृद्बला-
पुत्रमित्रानुकारान्॥ ७१॥

पूर्वश्लोके देहं विसृज्य यातिइत्युक्तं तत्र जीवत्—अ-
जीवद्वा विसृजतिजीवचेत्तर्हि कथमव्यापारं अजीवच्चे-
त्तर्हिकथं श्वासाद्युपेतमित्याशंक्य श्लोकद्वयेनोत्तरमा-
ह—रक्षन्निति। निजशयनगतं कुलायं शरीरं प्राणैः कृत्वा
रक्षन् यत्र कुत्रापि यातीति पूर्वेणान्वयः। तर्हि तत्र
क्षुत्पिपासादिप्राणकृत्यं कथं न दृश्यते इत्याशंक्याह—
किंभूतैः प्राणैः श्वासमात्रावशेषः श्वासमात्रं अवशिष्टं
एषां ते नहि प्रयोजकव्यतिरेकेण प्राणाः कर्म कुर्वं-
ति अथ तद्रक्षणे हेतुमाह तत्पुनः शरीरं प्रेतकल्पाकृतकं
माभूदिति अथास्तां तथात्वमिति चेत्तत्र बाधकमाह—
सारमेयादिभक्ष्यं माभूदिति निर्जीवस्य गंधं गृह्णतां
सारमेयादीनां श्वापदानां भक्ष्यं माभूदिति अथ पूर्व-
श्लोके स्वाप्नदेहान्निर्मायेत्युक्तं तदर्थप्रतिपादकं श्रु
त्यर्थं दर्शयति—स्वप्ने स्वीयप्रभावात् स्वसामर्थ्यात् ह-
यरथान् निम्नगा नदी पल्वलानि ईषत्संचितोद-
कानि तथानेकानि क्रीडास्थानानि तथा सुहृद्बलां-

पुत्रमित्रानुकारांश्च सृजति अनुकारशब्देन प्रागुक्तसंस्कारोत्पन्नानीत्यर्थः ॥ ७९ ॥

मातंगव्याघ्रदस्युद्विषदुरगकपीन्कुत्रचि-
त्प्रेयसीभिःक्रीडन्नास्तेहसन्वाविहरतिकु-
हचिन्मृष्टमश्नातिचान्नम्॥म्लेच्छत्वंप्राप्त-
वानस्म्यहमितिकुहचिच्छंकितःस्वीयलो-
कादास्तेव्याघ्रादिभीत्याप्रचलतिकुहचि-
द्रोदितिग्रस्यमानः॥ ८० ॥

तथा मातंगव्याघ्रदस्युद्विषदुरगकपींश्च सृजति तत्र कुत्राप्यहं ब्राह्मणः सन् म्लेच्छत्वं प्राप्तवानिति स्वीयसुहृल्लोकाच्छंकितः आस्ते । "स्वप्ने शूद्रत्वमापन्नइत्यादिवासिष्ठोक्तेः" तथा कुत्रचित् व्याघ्रादिभीत्या प्रचलति पलायनं करोति पलायनसमर्थोपि व्याघ्रादिना ग्रस्यमानः सन् क्रंदते रोदिति । उक्तार्थनिरूपिकाः क्रमेण श्रुतयः —"सयत्रायंप्रस्वपितीत्यस्यसर्वावतोमात्रामादायस्वयंविहत्यस्वयंनिर्मायस्वेनभासास्वेनज्योतिषास्वपितीत्यत्रायंपुरुषःस्वयंज्योतिर्भवतिनतत्रस्थरथयोगानपंथानोभवंतिअथरथान्रथयोगान्पथःसृ-

जतेनतत्रानंदामुदःप्रमुदोभवंत्यथानंदान्मुदःसृजतेनतत्र-
वेशंताःपुष्करिण्यः स्रवंत्यःसृजतेसहिकर्तातथाप्राणेनर-
क्षन्अपरंकुलायंबहिःकुलायादपरश्चरित्वातथास्वमांत-
उच्चावचंनीयमानोरूपाणिदेवःकुरुतेबहूनिउतेवस्त्रीभिःस-
हमोदमानोजक्षदुतेवापिभयानिपश्यन्"। भाष्यं—सः जी-
वः यत्र यदा स्वपिति निद्रां करोति तदास्य स-
र्वावतः सर्वं अवति रक्षति इति सर्वावित् तस्य स-
र्वावतः परमात्मनः मात्रां एकदेशं आदाय गृहीत्वा
स्वयं निहत्य स्वतएव सुषुप्त्यवस्थां त्यक्त्वा तथामायि-
कं वासनामयं स्वप्नदेहं स्वयं निर्माय स्वेन स्वया
भासा स्वसामर्थ्येन स्वेन ज्योतिषा स्वप्रकाशेन स्व-
पिति अत्रायं पुरुषः स्वयं ज्योतिर्भवति तत्र तस्मि-
न्स्वप्नसमये न रथाः संति रथयोगाः अश्वादयः न
पंथानोरथमार्गाः संति । परंतु असौ रथान् रथमा-
र्गान् पथः सृजति तथा न तत्र आनंदाः सुखविशे-
षाः मुदः क्षुद्रानंदाः प्रमुदः पुत्रादिलाभहर्षाश्च प-
रंतु अयमानंदादीन् सृजति तथा न तत्र वेशंताः
पल्वलानि स्रवंत्यः नद्यः संति पुष्करिण्यः सरांसि न
तडागानि संति परंतु एषः वेशंतादि सर्वं सृजते।
सहि कर्ता अंतरात्मा अथ दैनंदिनं स्वप्नदशायां प्रा-

णेन पंचवृत्तिना कौ लीयते तत्कुलायं भूमौ संनिविष्टं शरीरं रक्षन्सन् अन्यथा मृतभ्रांतिः स्यात् स्वयममृतः अमरणधर्मा कुलायाद्बहिश्चरित्वा शरीरांतर्गतोपि आकाशवद्बाह्येपि वसन् । यत्र कामं यथाभिन्नं पदं वा यत्र यत्र कामोविषयेपूत्पद्यते तं तं कामं संस्काररूपेण ईयते गच्छति अथ स्वमांतइति। ततः स्वमावस्थांते स्वमावसरे उच्चावचं देहमीयमानः प्राप्यमाणः उच्चं देवादि अवचं तिर्यगादि यथा संस्कारतारतम्यानुरूपं देहं गम्यमानः देवः प्रकाशात्मा बहूनि रूपाणि असंख्यानि वासनारूपाणि निवर्तयति तदेवाह—उतेव यथावासनं स्त्रीभिः सह मोदमानः उतेव जक्षदिव हसन्निव उतेव भयानि व्याघ्राद्युत्पन्नानि पश्यति ॥ ८० ॥

योयोदृग्गोचरोर्थोभवतिससतदातद्गतात्मस्वरूपाविज्ञानोत्पद्यमानःस्फुरतिननु यथाशुक्तिकाज्ञानहेतुःारौप्याभासोमृषैवस्फुरतिचकिरणाज्ञानतोंभोभुजंगोरज्ज्वज्ञानान्निमेषंसुखभयकृदताद्दृष्टसृष्टं किलेदम् ॥ ८१ ॥

यइति । जाग्रदवस्थायां योयोऽर्थः पदार्थः नृपपशुप-क्षितिर्यगादिरूपोदृग्गोचरोदृष्टिविषयोभवति सस पदार्थः तदा तद्दर्शनसमये तद्गतात्मस्वरूपाविज्ञानोत्पन्नएव स्फुरति तच्छब्देन पूर्वोक्तः पदार्थः तद्गतं यस्मिन्नंतर्यामित्वेन स्थितं यदात्मरूपं तस्य अविज्ञानमज्ञानं तस्मादुत्पद्यमानएव स्फुरति दृग्गोचरीभूतपदार्थोत्पत्तावधिकरणाज्ञानमेव कारणमित्यर्थः । तदेव दृष्टांतेन द्रढयति —यथेति । यथा रौप्याभासः शुक्तिकाज्ञानहेतुर्दृष्टः शुक्तिकायाअज्ञानमेव हेतुः कारणं यस्य शुक्त्यज्ञानेनोत्पादितोरजताभासः इदं रजतमित्याकारेण स्फुरति । तद्वदात्माज्ञानेनपदार्थाकारः स्फुरति यतः सुषुप्तावात्माकारान्तःकरणवृत्तौ सत्यां पदार्थमात्रं न स्फुरति परं किरणाज्ञानतोमरीच्यज्ञानान्मृगजलोत्पत्तिः तथा रज्ज्वज्ञानाद्भुजंगोत्पत्तिः एवं सप्रातिभासकोपि पदार्थः निमेषं निमेषसमयं यावत्सुखभयकं द्भवति दरिद्रस्यपिपासार्दितस्यच रौप्यमरीच्यंबुदर्शनादाश्वासनेन सुखं भवति तथैव भुजंगदर्शनाद्भयं भवति तथा प्रातिभासिकस्यापि पदार्थस्येषत्कार्यक्षमत्वं दृष्टमस्ति तद्वत् प्रकृतेपि क्षणिकसुखदुःखोत्पत्तिशक्तत्वमस्तीत्यर्थः । अतइदं पदार्थजातं किलेति

निर्धारणे दृष्टस्तष्टं दर्शनकालएव स्तष्टं परंतु दृढसंस्कारानुबंधेन ज्ञायते यथोल्मुके भ्राम्यमाणे परिधिरूपं तेजोगोचरीभवति नोल्मुकं भवतीत्यर्थः ॥८१॥

मायाध्यासाश्रयेणप्रविततमखिलंयन्मयातेनमत्स्थान्येतान्येतेषुनाहंयदपिहिरजतंभातिशुक्तौनरौप्ये॥ शुक्त्यंशस्तेनभूतान्यपिमयिनवसंतीतिविष्वग्विनेताप्राहास्माद्दृश्यजातंसकलमपिमृषैवेंद्रजालोपमेयम् ॥ ८२ ॥

अथोक्तार्थे भगवद्वाक्यं संवादयन्नाह—मायेति । यद्यस्मात्कारणान्मायारूपोयोयमध्यासः आरोपस्तस्याश्रयीभूतेन मया अखिलं विश्वजातं नामरूपात्मकं प्रविततं विस्तारितं तेन कारणेन एतानि भूतानि मदाश्रयवर्तीनि इति प्रतीयते परंतु तेषु भूतेषु अहं नास्मि असंगोह्यहं न वर्ते ननु कारणं हि स्वकार्यमभिव्याप्य तिष्ठतीति प्रसिद्धिरस्ति कथमुक्तं तेषु नाहमित्याशंक्य दृष्टांतेनोत्तरयति—यदपीति । यद्यपि शुक्तौ रजतं भाति परंतु रौप्ये शुक्त्यंशोन

दृश्यते अथ यदि दृश्येत भ्रमएव न स्यात् तेन कारणेन मयि भूतान्यारोपितानि परंतु तेषु नाहमित्यर्थः । इति विष्वग्विनेता जगद्गुरुः श्रीयादवेंद्रः प्राह तस्मात्कारणात्सकलमपि दृश्यजातं मृषैव किंभूतं इंद्रजालोपमेयं इंद्रजालवदुपमीयते तत् । तदुक्तं भगवता—"मयाततमिदंसर्वंजगदव्यक्तमूर्तिना । मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थितः" ॥ ८२ ॥

हेतुःकर्मैवलोकेसुखतदितरयोरेवमज्ञो-
विदित्वामित्रंवाशत्रुरित्थंव्यवहरतिमृ-
षायाज्ञवल्क्यार्तभागौ । यत्कर्मैवोचतुः
प्राक्जनकनृपगृहेचक्रतुस्तत्प्रशंसांवंशो-
त्तंसोयदूनामितिवदतिनकोप्यत्रतिष्ठत्य-
कर्मा ॥ ८३ ॥

अथ कर्ममीमांसाप्रकरणं व्याख्यायते—हेतुरिति । तत्र सर्वप्राणिनां सदसत्फलहेतुः कर्मैवास्ति इति निरूपयति लोके सुखतदितरयोः सुखदुःखयोः हेतुः कारणं कर्मैव नान्यत् । एवमुक्तप्रमेयमविदित्वा अज्ञोज्ञानहीनोजंतुः मित्रं शत्रुर्वा इत्थं मृषैव व्यवहरति

मित्रं सुखहेतुः शत्रुर्दुःखहेतुरित्थं अभिनिविष्टः सन् व्यवहरतीत्यर्थः यद्यस्मात्कारणात् प्राक् पूर्वं याज्ञवल्क्यार्तभागौ जनकगृहे यज्ञमंडपे कर्मैवोचतुः तथा तच्छब्देन कर्म तस्यैव प्रशंसां चक्रतुः । न केवलं तौ प्रशंसतुः किंतु यदूनां वंशोत्तंसः श्रीकृष्णोपि इति वदति स्म इतीति किं अत्र अस्मिँल्लोके कोप्यकर्मा न तिष्ठतीति । तदुक्तं गीतासु—"नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् । कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैरिति" ॥ ८३ ॥

वृक्षच्छेदेकुठारःप्रभवतियदपिप्राणिनोद्यस्तथापिप्रायोन्नंतृप्तिहेतुस्तदपिनिगदितंकारणंभोक्तृयत्नः॥ प्राचीनंकर्मतद्वद्विषमसमफलप्राप्तिहेतुस्तथापिस्वातंत्र्यंनश्वरेस्मिन्नहिखलुघटतेप्रेरकोस्यांतरात्मा॥८४॥

अथ पूर्वग्रंथे यद्यपि कर्मणः प्रशंसा कृता तथापि केवलस्य कर्मणोन फलदानसामर्थ्यं कुतः अचेतनत्वात्

किंतु ईश्वरप्रेरितस्येति सदृष्टांतमाह वृक्षच्छेदइति यद्यपि वृक्षच्छेदे कुठारः प्रभवति समर्थोभवति तथापि सः प्राणिनोद्यः प्राणोयस्यास्तीति प्राणी जीवत्पुरुषेण नोद्यः प्रेर्यमाणएव भवति नस्वातंत्र्येणेत्यर्थः । अथ पुनर्दृष्टांतमाह—प्रायइति । अन्नं प्रायोनिश्चयेन तृप्तिहेतुर्भवत्येव तथापि भोक्तृयत्नः पचनभोजनक्रियारूपः कारणं निगदितः । अथ यदर्थं दृष्टांतद्वयमुक्तं तदाह-प्राचीनमिति । तद्वदुक्तदृष्टांतवत्प्राचीनं कर्म प्राक् जन्मकृतं कर्म यद्यपि विषमसमफलहेतुर्भवति तथापि अस्मिन्नश्वरे कर्मणि फलदाने स्वातंत्र्यं नहि घटते किंतु तत्प्रेरकोंतरात्मा भवति अयमर्थः क्रियमाणं सदसत्कर्म तदैव नश्यति तद्धर्माधर्मरूपेण आत्मनि तिष्ठति तत्तदात्मना प्रेरितं सद्भोगानुकूलं भवति फलभोगस्तु कर्मसाक्षिणेश्वरेण प्रेरितस्याविद्यया देहाभिमानिनो जीवस्यैव संभवति "पुण्यःपुण्येनकर्मणाभवतिपापः पापेनेतिश्रुतेः" तदुक्तं भगवता—"कार्यकारणकर्तृत्वेहेतुः प्रकृतिरुच्यते । पुरुषःसुखदुःखानांभोक्तृत्वे हेतुरुच्यतेइति" ॥ ८४ ॥

स्मृत्यालोकेषुवर्णाश्रमविहितमदोनित्य-
काम्यादिकर्मसर्वंब्रह्मार्पणंस्यादितिनिग-

मगिरःसंगिरंतेतिरम्यम् ॥ यन्नासानेत्रजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेनतुष्येदंगीवसाक्षात्तरुरिवसकलोमूलसंतर्पणेन ॥ ८५॥

क्षुद्रदेवताराधनमपि ब्रह्मार्पणमेव भवतीत्याह—स्मृत्येति । लोकेषु मनुष्यलोकेषु स्मृत्या वर्णाश्रमक्रमेण यन्नित्यकाम्यादि कर्म विहितं तत्सर्वं निषिद्धव्यतिरेकेण पंचविधं ब्रह्मार्पणमेव स्यात् इति निगमगिरः अतिरम्यं युक्तियुक्तं संगिरंते यद्यपि कर्तारः फलाभिसंधानादन्यदेवतोद्देशेन कर्म कुर्वंति तथापि ब्रह्मार्पणमेव कर्तारस्तु तत्तद्वासनाभिर्लिप्यंते तत्र षड्विधानि कर्माण्यभिहितानि नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावंदनादीनि काम्यानि इष्टसाधनानि ज्योतिष्टोमादीनि। नैमित्तिकानि पुत्रजन्माद्यनुबंधीनि जातेष्ट्यादीनि। प्रायश्चित्तानि पापक्षयसाधनानि उपासनानि देवताराधनरूपाणि । प्रतिषिद्धानि हिंसादीनि । तत्र नित्यादीनां बुद्धिशुद्धिः परमं प्रयोजनं उपासनानां तु तदैकाग्र्यं । “ विविदिषंतियज्ञेनेत्यादिश्रुतेः । ” “ तपसा किल्बिषंहंतिइत्यादिस्मृतेश्च ” नित्यनैमित्तिकयोरुपास-

नानां चावांतरफलं पितृलोकप्राप्तिः। "कर्मणापितृलोकोविद्ययादेवलोकइतिश्रुतेः।" अथान्यदेवतोद्देशेन कर्म कृतं तद्ब्रह्मार्पणमित्यत्र युक्तिमाह—यदिति। नासानेत्रजिह्वाकरचरणशिरःश्रोत्राणां अवयवानां संतर्पणेन साक्षात्प्रतीतिः सिद्धा अंगी देही तुष्येत् क इव मूलसंतर्पणेन तरुरिव वृक्षचरणसंतर्पणेन यथा सकलोवृक्षः संतर्पितोभवति एवमन्यदेवतोद्देशेन कृतेपि कर्मणि अवयवीभूतः सकलदेवतात्मकः परमेश्वरएव तुष्यतीत्यर्थः॥ ८५॥

यःप्रैत्यात्मानभिज्ञःश्रुतिविदपितथाक-
र्मकृत्कर्मणोस्यनाशःस्यादल्पभोगात्पु-
नरवतरणेदुःखभोगोमहीयान्॥ आत्मा-
भिज्ञस्यलिप्सोरपिभवतिमहान्शाश्व-
तःसिद्धिभोगोह्यात्मातस्मादुपास्यःख-
लुतदभिगमेसर्वसौख्यान्यलिप्सोः॥८६॥

अथेश्वरानभिज्ञानेन यत्कर्मकृतं तद्व्यवस्थामाह—यइति। यः श्रुतिविदपि वेदज्ञोपि तथा कर्मकृत् यागादि कर्मकृत्पुरुषः आत्मानभिज्ञः आत्मबहिर्मुखः सन्प्रैति म्रियते अस्य पुरुषस्य कर्मणः नाशः स्या-

त् । कस्मात् अल्पभोगात् देवलोकादिभोगात् "तेतं-भुक्त्वास्वर्गलोकं विशालं" इत्यादिभगवद्वचनात् । तथा-स्य पुरुषस्य पुनरवतरणे महीयान्दुःखभोगोभवति । अथात्माभिज्ञः सन् यः फलेप्सुर्भवति तस्य का ग-तिरित्याह लिप्सोरप्यात्माभिज्ञस्य महान् शाश्वतः सि-द्धिभोगोभवति महान् स्वर्गलोकादप्यधिकः तथा-शाश्वतः बहुकालभोग्यः एवंविधोऽणिमाद्यष्टसिद्धि-भोगोभवति । तथा अलिप्सोः सिद्ध्यनपेक्षस्यात्माभि-ज्ञस्य पुरुषस्य तदधिगमे आत्मप्राप्तौ सर्वसौख्यानि भवंति । परमानंदप्राप्तिर्भवतीत्यर्थः अत्र श्रुतिः—"अ-थयोहवाअस्माल्लोकात्स्वलोंकंअदृष्ट्वाप्रैतिसएनमवि-दितोनभुनक्ति यथावेदोवाननूक्तोन्यद्वाकर्माकृतंभवति-यदुहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षी यतएवात्मानमेवलोकमुपासीतसयआत्मानमेवलोकमु-पास्तेनहास्यकर्मक्षीयतेस्माद्ध्येवात्मनोयद्यत्कामयतेत-त्तत्सृजतइति" । भाष्यं—अथ यः पुरुषः अस्मान्मृ-त्युलोकात्स्वलोंकमात्मानमदृष्ट्वा साक्षादकृत्वा प्रैति म्रियते सएनमात्मानमविदितः अजानन् कर्मफलं भोक्तुं न समर्थोभवति । भोगावसाने कर्मनाशात् च्यवतइत्यर्थः । अथ कुतः आत्मानं न पश्यती-

त्याह । यथा वेदोवाननूक्तः यथा वेदः अननूक्तः अर्थमनुलक्षीकृत्य न पठितः न अनूक्तः वेदतात्पर्यमजानतः आत्मदर्शनं कुतइत्यर्थः । तथा अन्यद्वेदार्थाद्विपरीतं यत्कर्म तत् अकृतमेव निरर्थकमेवेत्यर्थः । तथा अनेवंवित् न एवं वित् अनेवंवित् स्वस्वरूपानभिज्ञः पुरुषोयन्महत्पुण्यं अश्वमेधादिकं कर्म करोति तदस्य अंततः भोगावसानात् क्षीयते नाशमाप्नोति । अथ चित्तशुद्धिद्वारा आत्मप्रकाशकं यत्कर्म तन्न नश्यतीत्यर्थः । तदुक्तं भगवता—"अंतवत्तुफलंतेषांतद्भवत्यल्पमेधसांइति" । तदेवाह तदिति तत्तस्मात्कारणात् । "आत्मानमेव लोकमुपासीत सयः आत्मानमेवलोकमुपास्ते ह इति निश्चयेन तस्य कर्म न क्षीयते ननु विषयसुखलंपटस्य कथमात्मलोकापेक्षेत्यतआह—अस्मादिति अस्मादात्मनः सकाशात् यद्यत्कामयते कामनाविषयं करोति तत्तत्सृजते संपादयति आत्मयोगात् अणिमादिसिद्धयोलभ्यंते किंपुनरन्यदित्यर्थः ॥ ८६ ॥

सूर्याद्यैरर्थभानंनहिभवतिपुनःकेवलैर्ना-
त्रचित्रंसूर्यात्सूर्यप्रतीतिर्नभवतिसहसा

नापिचंद्रस्यचंद्रात् ॥ अग्नेरग्नेश्चकिंतु स्फुरतिरविमुखंचक्षुषश्चित्प्रयुक्तादात्मज्योतिस्ततोयंपुरुषइहमहोदेवतानांच चित्रम् ॥ ८७ ॥

अथ सूर्यचंद्रादीनां अर्थप्रकाशकत्वेन स्वातंत्र्यमस्तीति प्रकटयन्नाह—सूर्याद्यैरिति । सूर्याद्यैः सूर्यचंद्राग्निभिः केवलैः स्वतंत्रैरर्थभानं पदार्थज्ञानं न भवतीति प्राङ्निरूपितमेवास्तीति नात्र चित्रमपूर्वं । अथान्यदपूर्वमस्तीत्याह—सूर्यादीति लोके सूर्याद्याः स्वस्वप्रकाशकाइति प्रसिद्धिरस्ति सा न तात्विकी कुतः यतः सूर्यात् सूर्यप्रतीतिः सहसा अकस्मान्न भवति । तथा चंद्रप्रतीतिरपि चंद्रान्न भवति तथाऽग्नेर्दीपादेर्वा प्रतीतिर्नदीपादग्नेर्वा भवति । किंतु रविमुखं सूर्यचंद्रप्रभृति चित्प्रयुक्तादात्मप्रयुक्ताच्चक्षुषोनिमित्तभूतात् स्फुरति प्रकाशते न निद्राणस्य जात्यंधस्य प्रकाशते तस्मात्कारणादयं यः कश्चित्पुरुषोजागृत्यां स्वमेप्यात्मज्योतिः । स्वयंप्रकाशकोयस्य सतथाविधोस्ति । इह इंद्रियव्यापारे चित्रं देवानां चक्षुरादीनां महत्तेजोरूपरसादिप्रकाशकमस्ति । अत्रश्रुतिः—“चित्रं-

देवानामुद्गादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः । आप्रा-द्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च"। भा-ष्यं—जगतोजंगमस्य तथा तस्थुषः स्थावरस्य चरा-चरस्य सूर्यः प्रकाशकः आत्मैव न सूर्यादिर्यतः सआत्मा। मित्रस्य नेत्राधिदैवतत्वेन रूपग्राहकस्या दित्यस्य तथा वरुणस्य रसग्राहकस्य तथाग्नेर्वागा-धिदैवतस्य चक्षुः प्रकाशकः । नह्यात्मप्रकाशमंतरेण सूर्यादिप्रतीतिः अथैतदर्थे प्रत्यायकमनुभवमाह चि-त्रमिति । द्योतयंत्यर्थान् प्रकाशयंति तद्देवाश्चक्षुरा-द्यास्तेषामनीकं प्रकाशसमूहं चित्रं विचित्रमुद्गादुद-यं प्राप्तमनुभूयते । अत्रैतदुक्तं भवति । रूपरसा-दिषु पंचविधविषयेषु मध्ये सूर्यादिरेकैकस्यैव ग्राह-कं न सर्वेषां विचित्राणां तथा विविधानां ग्राह-कत्वं तु तत्तद्वृत्तिप्रवर्तकस्य परमात्मनएव संभवति नान्यस्य एवं देहावच्छेदेन यदध्यात्मस्वरूपं एकम-नुभूयमानं परमात्मतत्वं तत् द्यावापृथिवीमंतरिक्षं च आप्तस्वकीयेन तेजसा आसमंतादापूरयन् सर्वात्मक-त्वेन स्थितमित्यर्थः॥ ८७॥

प्राणेनांभांसिभूयःपिबतिपुनरसावन्नम-
श्नातितत्रतत्पाकंजाठरोग्निस्तदुपहितवं-

# लोद्राक्शनैर्वाकरोति॥व्यानःसर्वांगना-डीष्वथनयतिरसंप्राणसंतर्पणार्थंनिःसा-रंपूतिगंधंत्यजतिबहिरयंदेहतोपानसं-ज्ञः॥ ८८ ॥

अथ प्राणादिकृत्यमाह—प्राणेनेति । असौ देही प्राणेन कृत्वा भूयः अंभांसि पिबति पुनरन्नं चाश्नाति तस्य तस्य पीतस्य भक्षितस्य वा तदुपहितबलो-जाठराग्निः पाकं करोति तेन प्राणेन उपहितबलः वीज्यमानः सन् द्राक् शीघ्रं शनैर्वा यथा प्राणः प्रयत्नं करोति अथ पाकानंतरं परिपक्वान्नोदकस्य रसं सारभागं प्राणसंतर्पणार्थं व्यानः सर्वांगनाडीषु नयति प्राणशब्देनेंद्रियाणि तेषां संतर्पणार्थं करोति तथा शेषं निःसारमन्नमुदकं पूतिगंधं मूत्रविष्ठा-दिरूपेण त्यजति बहिर्निःसारयति देहतः अपानसंज्ञः श्रुतिः—"तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयो-नःप्रचोदयात् ॥ परोरजसेसावदोम्"॥ भाष्यं—तद्देवस्य द्योतमानस्य स्वप्रकाशस्य भर्गः तेजोधीमहि चिंतयामः । किंभूतं सवितुर्वरेण्यं सवितुः सूर्यस्य वरेण्यं उपजीव्यं अथ तदेव स्वरूपमाह—धियइति । योदेवः नोस्माकं धियः प्रचोदयात् बुद्धीः प्रेरयति नि-

श्चयात्मकत्वेन रूपं प्रकटयति । अत्रैतदुक्तंभवति—सत्यज्ञानानंदात्मकः सविता, सर्वजगदुपादानाश्रयतया जगत्कर्ता सर्वोपाधिभिः चिक्रीडिषुः सन्नुपाधिधर्मान् विजिगीषुः स्वयं वशीकृतमपि सर्वात्मनामात्मभूतः सन् अंतर्यामी देवोनो स्माकं धियोधीः प्रचोदयात् तस्य सवितुर्देवस्यात्मभूतं संसारक्लेशमूलभर्जकं भर्गः तेजः परं ज्योतिः धीमहि ध्यायेमहि । किंभूतः रजसः परः अत्र रजसइति चतुर्थीपंचम्यर्थोवगम्यते । असौ अदः व्यक्ताव्यक्तस्वरूपाद्रजसोलोकात्परोरजांसि लोकाइति । यास्कः सावदोम् ॐइत्यर्वाग्जनीप्रणवगम्या ॥ ८८ ॥

व्यापारंदेहसंस्थःप्रतिवपुरखिलंपंचवृ-
त्त्यात्मकोसौप्राणःसर्वेंद्रियाणामधिप-
तिरनिशंसत्तयानिर्विवादम्॥यस्येत्थंचि-
द्घनस्यस्फुटमिहकुरुतेसोऽस्मिसर्वस्यसा-
क्षीप्राणस्यप्राणएषोप्यखिलतनुभृतांच-
क्षुषश्चक्षुरेषः॥ ८९॥

एवं प्राणादीनां कृत्यमुक्त्वेदानीं तन्निखिलवृत्त्यात्मकस्य मुख्यप्राणस्य सत्ताप्रकाशदानेन तत्साक्षिसच्चिदानंदमात्मानं विशदीकृत्य लक्षयति—व्यापारमिति ।

इह व्यष्टिदेहे समष्टिदेहे च चिद्घनस्य चेत्परहित-चिन्मात्रस्य यस्यात्मनः सत्तया सत्तां प्राप्य सन्भूत्वा पंचवृत्त्यात्मकः पूर्वोक्तप्राणनादिपंचवृत्तिमान् भूत्वा देहसंस्थः समष्टौ समष्टिरूपेण उपास्योभूत्वा व्यष्टिदेहे व्यष्टिरूपेणोपासकोभूत्वा सएव सर्वेंद्रियाणां सर्वेषां शब्दादिज्ञानसाधनानां समष्टिव्यष्टिदेहस्थानां करणानामधिपतिः स्वामी तं विना सर्वकरणव्यापारानुपपत्तेः असौ प्राणः पूर्वोक्तप्राणः जीवभूतः सन् प्रतिवपुः प्रत्येकं सर्वशरीरेषु स्फुटं व्यक्तं यथा तथा अखिलं संपूर्णं व्यापारं व्यवहारं कुरुते निर्वर्तयति । सएवं विधसर्वसत्ताप्रकाशदानेन निर्वाहकः अतएव सर्वस्य समस्तस्य कार्यस्य निमित्तोपादानत्वाभ्यां साक्षी अव्यवधानेन प्रकाशकः अस्मि भवामि सएवाहमस्मीत्यर्थः । अत्रश्रुतिप्रमाणयति—“एषःप्रत्यक्परोक्षत्वरहितःप्राणस्यसमष्टिव्यष्टिरूपेणसकलजगद्व्यापारकारणस्यवायोःप्राणजीवनहेतुः”। भाष्यं—प्रत्यक्परोक्षहीनः आत्मासकलतनुभृतां समस्तशरीरधारिणां व्यष्टिसमष्टिजीवानां चक्षुषः ज्ञानस्य चक्षुः ज्ञानप्रकाशकइत्यर्थः ॥ “प्राणस्यप्राणमुतचक्षुषश्चक्षुरित्यादिश्रुतेः ”॥ ८९ ॥

यंभांतंचिद्घनैकंक्षितिजलपवनादित्यचं-
द्रादयोयेभासातस्यैवचानुप्रविरलगतयो
भांतितस्मिन्वसंति॥ विद्युत्पुंजोग्निसंघो-
प्युडुगणविततिर्भासयेत्किंपरेशंज्योतिः-
शांतंह्यनंतंकविमजममरंशाश्वतंजन्म-
शून्यम्॥९०॥

एवं सर्वप्रकाशकत्वेन लक्षीकृतस्यैव स्थूणानिखनन-न्यायेन दृढीकरणाय तदेवं सर्वप्रकाशकत्वमुक्तमपि। "नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोय-मग्निः।तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति" इतिश्रुत्यंतरप्रमाणेन द्रढयति। यं भांतमिति। प्रविर-लगतयः अन्योन्यं न श्लिष्टा गतिः स्वरूपव्यवहारा-दिस्थितिर्येषां ते तादृशाः क्षितिः पृथ्वी जलं तोयं पवनोवायुः। आदित्यः सूर्यः चंद्रः सोमः आदिर्येषां वागादीनां ते सर्वे यं सच्चिदानंदघनं एकं निरपेक्षं अ-न्यनिर्वाहक्षमं आत्मानं भांतं स्वतः प्रकाशमानं संतं अनु पश्चात् भांति प्रकाशंते किंच तस्मिन् स्वप्रकाश-सदात्मनि वसंति तिष्ठंति तत्सत्तां प्राप्यैव स्वस्वव्यापा-रक्षमाजाताइत्यर्थः। तमुक्तलक्षणंपरेशं सर्वजगत्कार-

णभूतं प्रकृतिनियंतारं शांतं जगद्वासनाऽस्पृष्टं अनंतं नाश्यनाशान्यथानुपपत्त्या स्वतोनाशहीनं। कविं ज्ञानरूपं शास्त्रयोनित्वेन सर्वज्ञोपलक्षितमित्यर्थः अजं जन्मशून्यं अमरं मृतिशून्यं जन्मनाशान्यथानुपपत्त्या जन्ममरणहीनमित्यर्थः। तत्रैव हेतुद्वयं स्पष्टार्थं शाश्वतं नित्यं जन्मशून्यं जन्मरहितं एतेन यास्कपठिताः "जायतेअस्तिवर्धतेविपरिणमतेअपक्षीयतेविनश्यतीति" षड्विकाराअपिनिरस्ताज्ञेयाः। तमात्मानं विद्युत्पुंजो विद्युतां पुंजः समूहः लोकदृष्ट्या प्रकाशकोपि तथा अग्निसंघः वह्नीनां समूहस्तथाभूतोपि। तथा उडूनां नक्षत्राणां गणस्य समूहस्य विततिः विस्तारः उपलक्षणमेतत् सूर्यादीनां। तत्सर्वप्रकाशजातं भासयेत्किंप्रकाशयेत् किं नैव प्रकाशयेत्। लोकेपि प्रकाशस्य प्रकाशक प्रकाशयितृत्वमदृष्टचरमिति भावः॥ १०॥

तद्ब्रह्मैवाहमस्मीत्यनुभवउदितोयस्यक-
स्यापिचेद्वैपुंसःश्रीसद्गुरूणामतुलितकरु-
णापूर्णपीयूषदृष्ट्या॥जीवन्मुक्तःसएवभ्रम-
विधुरमनानिर्गतेनाद्युपाधौनित्यानंदैक-
धामप्रविशतिपरमंनष्टसंदेहवृत्तिः॥११॥

एवंभूतात्मानुभवतोजीवन्मुक्तिः फलं भवतीत्याह—तद्ब्रह्मेति। यस्य कस्यापीत्युक्त्या जातिवर्णाश्रमवयोवस्थास्त्रीपुरुषोच्चनीचादिभेदालोकदृष्टाः न शास्त्रीयज्ञानप्रतिबंधकाइतिसूचितं। लौकिकानां अनधिकारित्वभ्रमभूतानामतिदेशिकाधिकारित्वनिरूपकवाक्यैर्बाधस्य दृश्यमानत्वात्पुंसः इत्युक्त्या मुमुक्षोः मोक्षस्य मुख्यसाधनतत्वज्ञानकारणगुरुशुश्रूषापूर्वकश्रवणादिषु पुरुषप्रयत्नएवापेक्षितइति सूचितं। यस्य कस्याप्यधिकारिणः पुरुषस्य श्रीसद्गुरूणां मुक्तिश्रीसहितानां सतां सद्रूपब्रह्मसाक्षात्कारवतां गुरूणां देशिकवर्याणां गुरूणामुक्तिः। श्रीमत्त्वे सत्वे च श्रुतिः " भद्रैषांलक्ष्मीर्निहिताधिवाचि "। " अस्तिब्रह्मेतिचेद्वेद । संतमेनंततोविदुरिति "। अतुलिता निरुपमा या करुणा तया पूर्णा भरिता अतएव पीयूषं अमृतं तद्वन्मरणनिवर्तिका दृष्टिः ज्ञानं तया कृत्वा " दृश्यतेत्वग्र्ययाबुद्ध्येतिश्रुतेः " गुरुतः प्राप्तया ब्रह्मविद्ययेत्यर्थः। तदुक्तलक्षणं ब्रह्मैव देशकालवस्तुकृतपरिच्छेदरहितं तत्पदलक्ष्यं अहमेव त्वंपदलक्ष्यं कूटस्थरूपमेव ततः पृथगहं न भवामीत्येवं निश्चयरूपः अनुभवः साक्षात्कारः उदितः आविर्भूतः चेत् यदि स्यात्। तदानीमेवसपुरुषः

भ्रमविधुरमनाः भ्रमेण विपरीतज्ञानेन विधुरं वियुक्तं मनः जीवन्मुक्तिव्यवहारयोग्यप्रारब्धशेषं यावन्मनो- यस्य अतएव नष्टसंदेहवृत्तिः नष्टाविलीनाः संशयविशिष्टाः वृत्तयोयस्य सतथाभूतः सन् जीवन्मुक्तः भवति तस्यैव विदेहमुक्तिफलमप्याह सएवेति । सजीवन्मुक्तएव प्रारब्धांते अनाद्युपाधौ निर्मूलमायोपाधौ निर्गते स्वरूपतोलयं प्राप्ते सति बीजनाशस्य पूर्वमेव ज्ञानसमकालं जातत्वात् परमं कार्यकारणास्पृष्टं निरुपाधिकमित्यर्थः । नित्यानंदं निरतिशयं बाधहीनं सुखरूपं एकं मुख्यं धाम तेजः गृहं च स्वरूपं सर्वसूर्यादितेजः प्रकाशकत्वात् सर्वब्रह्मादिजीवानां निवासभूतत्वाच्च प्रविशति सएव भवतीत्यर्थः ॥ ११ ॥

नोदेहोनेंद्रियाणिक्षरमतिचपलंनोमनो-
नैवबुद्धिःप्राणोनैवाहमस्मीत्यखिलजड-
मिदंवस्तुजातंकथंस्याम् ॥ नाहंकारोन-
दारागृहसुतसुजनक्षेत्रवित्तादिदूरंसा-
क्षीचित्प्रत्यगात्मानिखिलजगदधिष्ठान-
भूतःशिवोहम् ॥ १२ ॥

इदानीं तस्यैव ज्ञानिनोयावत्प्रारब्धं सर्वव्यवहाराप्रतिबंधकत्वेन जीवन्मुक्तिसुखमनुभवितुं सर्वदेहाद्यसत्वानुसंधानपूर्वकं स्वात्मसुखानुसंधानमाह—नोदेहइति। देहः पंचीकृतपंचभूतकार्यः अन्नविकारः स्थूलदेहः अहं न मम चिद्रूपत्वात्सत्वाच्च । देहस्तु क्षरं अतिचपलमिति हेतुगर्भितविशेषणद्वयं क्षरत्वान्नाशधर्मित्वात् अन्यथान्यथापरिणामत्वेनातिचंचलत्वाच्च । आत्मा तु सद्रूपत्वेन स्थिरश्चिद्रूपश्च अनुभूयते । अतोवैलक्षण्यादुभयोरहमात्मा देहोन भवामि किंतु देहस्तु नास्त्येवेत्यर्थः । किंच अहं आत्मा इंद्रियाणि क्रियासाधनानि ज्ञानसाधनानि चेत्युभयात्मकानि दशापि न भवामि इंद्रियाणामन्योन्यव्यावृत्त्या असत्वप्रतीतेः । विषयाणामसत्वेनेंद्रियाणामसत्वस्यानुभूयमानत्वाच्चंचलत्वाच्च तान्यहं न भवामि पूर्वविशेषणद्वयमप्यनात्महेतुत्वेनात्र योज्यं । किंच अहं मनः संशयात्मकं न भवामि नास्मि । कामादिवृत्तिमत्वेनोत्पत्त्यादिमत्वेन चविकारवत्वादसत्वाच्च मनोनास्त्येव अहं तु मनोविकाराणां उत्पत्तिविनाशयोश्च प्रकाशकत्वेन सच्चिद्रूपेण प्रकाशमानः अस्म्यतोमनोनाहमित्याशयः । किंच बुद्धिः निश्च

यात्मिकांतःकरणवृत्तिरपि अहं न भवामि जाग्रदाद्यवस्थावत्वेनोत्पत्तिविलयत्वात् अहं तु आत्मावस्थात्रयतद्बुद्धिसाक्षी सद्रूपः सबुद्धिः कथं स्यान्नैव स्यामित्यर्थः । किंच प्राणः पंचवृत्त्यात्मकः शारीरो-वायुः अहं नैवास्मि नैव भवामि इदं मम कूटस्थस्यात्मनोप्रकाश्यं अखिलं जडमिदं सर्वं अचिद्रूपं देहादिवस्तुजातं पदार्थसमूहः अहं कूटस्थः सच्चिदानंदः कथं स्यां केन प्रकारेण भवामि अतएवाहं कार्यस्य सर्वस्य दृश्यमानत्वात् जडत्वादसत्वाद्विकारित्वाच्च अहं कारस्यापि तथासत्वात्सः अहं कभरः अहं द्रष्टा सच्चिदानंदः कूटस्थः इत्यतीव वैलक्षण्यान्न भवामि अतएव दाराः स्त्री गृहं वेश्म सुताः पुत्राः सुजनाः संबंधिबांधवमित्रभृत्यादयः क्षेत्रं भूमिः वित्तं द्रव्यं आदिर्मुख्यं यस्य जातिकुलवर्णाश्रमधर्मादिः तत्सकलमपि देहादिसापेक्षमिति कृत्वा दूरं अतस्तन्नैवाहमस्मि । अहं तु एतस्य देहादिजडवस्तुजातस्य साक्षादव्यवधानेन प्रकाशकत्वात्साक्षीति प्रकाशकत्वाच्चित् ज्ञानं सर्वांतरत्वेन स्वतः प्रकाशमानत्वात्प्रत्यक् आतत्वात्सद्रूपत्वादात्मायं विना सर्वारोपाधिष्ठानस्य शबलब्रह्मणोप्यसिद्धेरुप-

चारेणनिखिलस्य समस्तजगतोविश्वस्याधिष्ठानभूतः अधिष्ठानत्वेनोक्तः शिवः सुखरूपः अस्मि ॥ १२ ॥

दृश्यंयद्रूपमेतद्भवनिचविशदंनीलपीताद्य-
नेकंसर्वस्यैतस्यदृग्वैस्फुरदनुभवतोलो-
चनंचैकरूपम् ॥ तद्दृश्यंमानसंदृक्परिण-
तविषयाकारधीवृत्तयोपिदृश्याद्दृग्रूपए-
वप्रभुरिहसतथादृश्यतेनैवसाक्षी ॥ १३ ॥

एवं जीवन्मुक्तस्यात्मानुसंधानमुक्त्वेदानीं प्रकारांतरेण तदेव पुनराह—दृश्यमिति । एतत् इदंतया प्रतीयमानं रूपं रूप्यते प्रकाश्यतइति रूपं प्रकाशितं तत्सर्वं दृश्यं दृग्विषयज्ञानैकरूपं नीलपीतादि नीलं श्यामं पीतं गौरं इत्यादिविविधगुणवत्वात् एतस्य प्रतीयमानस्य सर्वस्य अनेकविधस्य रूपस्य दृक् दृश्यते रूपमनया सा दृष्टिः वै निश्चयेन स्फुरदनुभवतः स्फुरंति प्रतीयंते अनुभवारूपाणि स्फुरणानि यस्यां सा तथोक्ता सा लोचनं रूपालोकसाधनत्वात् । तच्चैकरूपं एकधैव प्रतीयते । किंच तल्लोचनमपि दृश्यं प्रतीतिविषयं अतोजडं तस्यापि दृक् दर्शनसाधनं मानसं मनः अस्ति तस्यापि मानसस्य दृश्यत्वेनानुभूयमा-

नत्वात्तस्य दृक् दृष्टिः धीर्निश्चयात्मकमंतःकरणं तस्याअपि अनुभूयमानत्वात् । परिणतविषयाकारधीवृत्तयोपि परिणामेन विषयाकृतित्वेन अनेकविधत्वात् विकारत्वात् धियोवृत्तयोदृश्याएव सर्वस्यैतस्य जडविकारित्वेनानात्मत्वं निश्चेयं इह जडसमूहे सर्वस्मिन् प्रभुः सर्वप्रकाशनसमर्थः साक्षी अव्यवधानेन सर्वप्रकाशकः आत्मा दृग्रूपएव सर्वप्रकाशसाधनभूतोपि तथा विषयवत् नैव दृश्यते अनुभवविषयोनैव भवतीत्यर्थः ॥ १३ ॥

रज्ज्वज्ञानाद्भुजंगस्तदुपरिसहसाभाति मंदांधकारेस्वात्माज्ञानात्तथासौभृशमसुखमभूदात्मनोजीवभावः ॥ आप्तोक्त्याहिभ्रमांतेसचखलुविदितारज्जुरेका तथाहंकूटस्थोनैवजीवोनिजगुरुवचसा साक्षिभूतःशिवोहम् ॥ १४ ॥

इदानीं तस्यैव जीवन्मुक्तस्य स्वरूपं स्वगुरुवचनविश्वासपूर्वकं युक्त्या स्वजीवत्वाबाधेन स्वात्मानुसंधानमाह—रज्ज्वज्ञानादिति । यथा मंदांधकारे ईषदंधकारावृते आलोके रज्ज्वज्ञानात् रज्जुरूपानवलोकनात्

तदुपरि तत्सदृशाज्ञातरज्ज्वामित्यर्थः । सहसा अक-स्मात् भुजंगः सर्पः भाति । भासते तथा तेनैव प्रका-रेण स्वात्माज्ञानात् स्वस्वरूपानवलोकनात् स्वसदृशेऽनवलोकिते आत्मनि असौ समस्ताज्ञान्यनुभूयमानः भृशं अत्यंतं असुखं दुःखरूपः आत्मनः सदाधारं विना-रोपासिद्धेः । आत्मसंबंधी जीवभावः जीवत्वं भाति प्र-काशतइत्यर्थः । सभ्रांतिरेवेति भावः । यथा रज्जुसर्प-दृष्टांते आप्तोक्त्या प्रामाणिकपुरुषवचनविश्वासेन अ-हिभ्रमांते सर्पभ्रांतिनिवृत्तौ सत्यां सः सर्पप्रत्ययः पूर्वः विदिता ज्ञाता सति एका रज्जुरेकाज्ञातारज्जुरहिता रज्जुः रशनाप्रत्ययएव अभूत् जाता । तथा तेन प्र-कारेण निजगुरुवचसा निजः स्वकीयः गुरुर्देशिकः त-स्य वचसा युक्त्या तत्वमसीत्यादिवाक्यार्थबोधनरूपां तेन कृत्वा जीवत्वभ्रमांतेजीवत्वभ्रमे नष्टे सतीत्यर्थः । अहं जीवः सुखी दुःखी जननमरणकर्तृभोक्तृरूपः नैव नास्म्येव अहं साक्षिभूतः जीवस्याव्यवहितप्रकाश-त्वात्साक्षित्वोपचारवान् वस्तुतस्तु कूटस्थः निर्विकारः शिवः आनंदरूपः अस्मि ॥ १४ ॥

किंज्योतिस्त्वेवदस्वाहनिरविरिहमेचंद्रदी-
पादिरात्रौस्यादेवंभानुदीपादिकपरिक-

लनेकिंतवज्योतिरस्ति॥ चक्षुस्तन्मीलने किंभवतिचसुतरांधीर्धियःकिंप्रकाशेतत्रैवाहंततस्त्वंतदसिपरमकंज्योतिरस्मिप्रभोहम्॥ १५॥

इदानीं तस्यैव जीवन्मुक्तस्य स्वहृदि गुरुशिष्यभावं प्रकल्प्य संवादेन तस्य परमज्योतिरूपानुसंधानमाह—किंज्योतिरिति। हेशिष्य ते तव अहनि दिवसे घटपटादिप्रकाशव्यवहारे रात्रौ च निशि किं ज्योतिः तेजः किमस्ति तद्वदस्व कथय येन दिनरात्रिव्यवहारः सिध्यति इति पृष्टे गुरुणा शिष्यः चक्षुः नेत्रं इत्याह येन लोके प्रकाशकं सूर्यचंद्राग्निरूपं प्रकाशकं द्रव्यं तत्प्रकाश्यं द्रव्यं च व्यवह्रियते तच्चक्षुरेव ज्योतिरित्यर्थः। एवमुत्तरे शिष्येण दत्ते गुरुः पृच्छति तन्मीलनइति तन्मीलने चक्षुषः निमीलने कृते सति किंज्योतिः पश्चात्सूर्यचंद्राग्निप्रकाशकतत्प्रकाश्यघटादिस्फुरणस्य किंप्रकाशसाधकं तेजः ते अस्ति इति पृष्टः शिष्यआह नेत्रनिमीलनानंतरं सर्वव्यवहारस्फुरणसाधनं ज्योतिः नितरां अत्यंतप्रकाशकं धीर्बुद्धिः अस्तीत्युत्तरं दत्तं ततोगुरुः पृच्छति धियइति। धियोपि बुद्धेः नेत्रसूर्या

दिवत्प्रकाशत्वेनानुभूयमानायाः तत्प्रकाशे ज्ञेयत्वव्यवहारे ते तव किंज्योतिस्तेजः इति पृष्टः शिष्यआह अहमिति । मम बुद्ध्यनुभवितृत्वात् । तत्र बुद्धिप्रकाशव्यवहारे साधकं अहंज्योतिरस्मि एवमुक्ते शिष्येण गुरुः पृच्छति तत्रेति । तत्रापि अहंत्वस्यापि अनुभूयमानत्वव्यंवहारे साधकं तव किंज्योतिः किंप्रकाशकं तेजः अस्ति इति पृष्टः शिष्यआह अहमिति । अहंत्वप्रकाशकआत्मास्तीत्यर्थः । एवमुक्तोगुरुराह ततस्त्वमिति । त्वदन्यस्य कस्यापि प्रकाशद्रव्यस्याभावात् प्रकाशद्रव्यस्यापि तत्प्रकाशयितुमशक्यत्वात् स्वयंज्योतिष्ट्वेन प्रकाशमानंत्वात् तत्परमेकं ज्योतिः कार्यकारणप्रकाश्यप्रकाशकत्वाद्यस्पृष्टं तेजः त्वं त्वंपदलक्ष्यआत्मा असि भवसि । अतस्तज्ज्योतिः प्रकर्षभानरूपः अस्मीत्यनुभवः अत्रार्थेबृहदारण्यकीश्रुतिरपि “आत्मैवास्यज्योतिरित्यादिका” ॥ १५ ॥

कंचित्कालंस्थितःकौपुनरिहभजतेनैवदेहादिसंघंयावत्प्रारब्धभोगंकथमपिससुखंचेष्टतेसंगबुध्या॥ निर्द्वंद्वोनित्यशुद्धोविगलितममताहंकृतिर्नित्यतृप्तोब्रह्मानंद-

स्वरूपःस्थिरमतिरचलोनिर्गताशेषमो-
हः॥ १६ ॥

एवं भूतानुभववतोजीवन्मुक्तस्य व्यवहारमाह—कंचिदिति। सः ब्रह्मवेत्ता जीवन्मुक्तइत्यर्थः। कंचित्कालं कतिचित्कालपर्यंतं यथालोकं यथाधिकारिव्यक्तिपरिच्छेदककालपर्यंतमित्यर्थः। कौ स्थूलदेहापेक्षया पृथिव्यां वस्तुतस्तु ब्रह्मवसिष्ठादीनामपि अन्यलोकेषु स्थितिश्रुत्या कौ क्षेत्रशब्दवाच्येंतःकरणे स्थितः वर्तमानइव लक्षितोपि इह पृथिव्यां क्षेत्रे च पुनः देहक्षेत्रादिसत्वनिवृत्तेः पश्चात् देहादिसंघं स्थूलदेहस्त्रीपुत्रमित्रादिसमूहं नैव भजते नैवांगीकरोति। सत्वेनात्मनि तत्संबंधवत्वप्रतीतिं न करोतीत्यर्थः किंच क्षेत्रस्थूलदेहादिसंघे च यावत्प्रारब्धभोगं प्रारब्धभोगपर्यंतं कथमपि ब्रह्मवेत्तुः ईश्वरत्वेन मायाप्रारब्धयोरधीनत्वाभावात्। तद्विना च कर्तृत्वभोक्तृत्वानुपपत्तेर्भोक्तृत्वान्यथानुपपत्त्या प्रारब्धभोगस्य ब्रह्मज्ञानां ब्रह्मादीनां कर्तृभोक्तृव्यवहारस्यापि दृश्यमानत्वात्सर्वव्यवहारस्य मायामात्रत्वेनानिर्वचनीयोब्रह्मवेतृव्यवहारइतिभावः असंगबुद्ध्या असंगब्रह्मात्मबोधेन सुखं यथा

भवति तथा निःसंशयत्वान्निर्दुःखमित्यर्थः । चेष्टते चे
ष्टावत्वेन प्रतीतोभवतीत्यर्थः । तस्यासंगबोधमेवोत्तरा
र्धेन विशेषणैर्विशदयति निर्द्वंद्वः सुखदुःखादिद्वंद्वहीन
तत्र हेतुः नित्यशुद्धः जीवत्वस्य पापपुण्यवत्वेन शु
द्धत्वस्य कादाचित्कत्वाद्ब्रह्मणोभेदं प्राप्तस्य ज्ञानिन
कालत्रयेपि पुण्यपापहीनत्वान्नित्यशुद्धत्वमिति भावः
अतएव विगलितममताहंकृतिः अत्यंतमुत्पत्तिबीजर-
हितत्वेन नष्टा ममता अन्यत्र पुत्रादौ देहादौ चाहंकृ-
तिस्तादात्म्यं यस्य सः अतएव नित्यतृप्तः निरंकुश-
संतोषवान् । तत्र हेतुः ब्रह्मानंदस्वरूपः अपरिच्छिन्ना-
नंदरूपः स्थिरमतिः स्थिरे ब्रह्मणि मतिर्यस्य स्वतश्च
ब्रह्मरूपत्वादचलः स्थिरः तत्र हेतुः निर्गताशेषमोहः
निःशेषनिवृत्तः अशेषः मूलाज्ञानपर्यन्तः अज्ञानसमू-
हः विपरीतज्ञानसहितोयस्य । अतोज्ञानिनि चेष्टा या
प्रतीयते सा माययाइति भावः ॥ १६ ॥

जीवात्मब्रह्मभेदंदलयतिसहसायत्प्रका-
शैकरूपंविज्ञानंतच्चबुद्धौसमुदितमतुलं
यस्यपुंसःपवित्रम् ॥ मायातेनैवतस्यक्ष-
यमुपगमितासंसृतेःकारणंयानष्टासा-

कार्यकर्त्री पुनरपि भविता नैव विज्ञानमा-
त्रात्॥९७॥

इदनीं ज्ञानिनि प्रतीयमानस्य चेष्टामात्रस्य संसारजनकत्वाभावं सहेतुकं प्रपंचयति—जीवात्मेति । यत् महावाक्यजन्यत्वे सति गुरुमुखश्रुत्या स्वतोयुक्तिपूर्वकसंभावित्वेन निश्चितं ज्ञानं चरमवृत्त्याख्यं प्रकाशैकरूपं प्रकाशएवैकं मुख्यरूपं यस्य तादृशं सहसा अकस्मात् तत्कालमित्यर्थः। जीवात्मब्रह्मभेदं जीवात्मनः त्वंपदलक्ष्यस्य कूटस्थस्य ब्रह्मणः तत्पदलक्ष्यस्य च भेदं भिन्नत्वं कारणेन मूलाज्ञानेन सह दलयति नाशयति । तत्तादृशं पवित्रं रागद्वेषादिवासनासहितं सर्वमलनिवर्तकत्वात्पावनं "नहिज्ञानेनसदृशंपवित्रमिहविद्यते"इति भगवदुक्तेः। अतुलं निरुपमं यस्याधिकारिधुरीणस्य पुंसः पुरुषप्रयत्नवतः बुद्धौ शुद्धांतःकरणे समुदितं संशयविपर्ययरहितमाविर्भूतं अभूत् तस्य पुरुषस्य तेनैवान्यसाधननिरपेक्षेण ज्ञानेन कर्त्री या संसृतेः कारणं संसारस्य हेतुरूपा माया स्वतः कार्यकारणहीनत्वेनार्थशून्या प्रकृत्यपरपर्याया क्षयं नाशं उपगमिता प्रापिता विज्ञानमात्रात् आ-

भासमात्रत्वेन सा माया पुनरपि नाशप्राप्तेः पश्चा-
दित्यर्थः । अपिशब्दात्पूर्वमपि कार्यत्वं कर्तृज्ञानि-
दृष्ट्या नासीत् । किंपुनर्ज्ञानानंतरमित्यर्थः । नष्टा
नाशं प्राप्ता सती कार्यकर्त्री कार्यं भ्रमः तस्य
कर्त्री जनका नैव भविता न भविष्यतीत्येवं नि-
श्चयएव ॥ १७ ॥

विश्वंनेतिप्रमाणाद्विगलितजगदाकार-
भानस्यजेद्वैपीत्वायद्वत्फलांभस्यजाति
चसुतरांतत्फलंसौरभाढ्यम् ॥ सम्यक्स-
च्चिद्घनैकामृतसुखकवलास्वादपूर्णोल्हदा-
सौज्ञात्वानिःसारमेवंजगदखिलमिदंस्व-
प्रभःशांतचित्तः ॥ १८ ॥

इदानीं भासमानायामपि संसृतौ ज्ञानिनि तत्त्यागंदृष्टां-
तेन संभावयन्नाह— विश्वमिति । असौ ज्ञानी विश्वं
जगत् न नास्ति इति प्रमाणात् एवं विधस्वतःप्रमाण-
भूतात् “नेहनानास्तिकिंचनेति” श्रुतिवाक्यादित्यर्थः ।
विगलितजगदाकारभानः विगलितं बीजसहितं नष्टं ज-
गतः आकारइव आकृतिमज्ञानं भासनं किंच यस्य ल्हदा

सर्वापवादेन सम्यक् चिद्घनैकामृतसुखकवलास्वादपूर्णः समीचीनतया चिद्रूपं यद्घनं निबिडं अज्ञानजगदादिप्रवेशात्सम्यक् यच्छिद्रहीनमित्यर्थः। एकं स्वगतसजातीयभेदहीनं अमृतं नाशहीनं सुखमानंदः तस्य कवलोग्रासः यथा ग्रासः हस्तेन मुखे क्रियते तद्वत्सांख्ययोगहस्तेनांतःकरणस्य विद्यारूपमुखे कृतः ग्रासत्वेनोक्तः तस्यास्वादोनुभवः यद्वत् मुखे क्षिप्तस्य ग्रासस्य जिह्वयेव तेन पूर्णः नित्यतृप्तः सन् एवं उक्तरीत्या अखिलं समस्तं जगत् विश्वं निःसारं सत्वसुखत्वहीनं अतएवेदं दृश्यते न प्रतीयमानत्वाच्चित्त्वरहितं ज्ञात्वानुभूय शांतचित्तः शांतं भर्जितबीजत्वेनोपरतं चित्तं चेतोयस्य सः सज्जगत्त्यजेत् विसृजेत् तत्र दृष्टांतः यद्वदिति। लोके यद्वत् यथा कोपि फलांभः नारिंगाम्रादेः फलस्यः अंभः रसं सुतरां अत्यंतं निःशेषमित्यर्थः। पीत्वा प्राश्य तत्फलं पीतरसफलं सौरंभाढ्यं सुगंधभरितमपि वै निश्चयेन फलगतसौगंध्यस्य तृप्तिहेतुत्वाभावात् तृप्तस्य तृप्त्यपेक्षाभावाच्च त्यजति तद्वदिति संबंधः॥ १८॥

क्षीयंतेचास्यकर्माण्यपिखलुहृदयग्रंथिरुद्भिद्यतेवैछिद्यंतेसंशयायेजनिमृतिफल-

दादृष्टमात्रेपरेशे ॥ तस्मिंश्चिन्मात्ररूपे गुणमलरहितेतत्वमस्यादिलक्ष्येकूटस्थे प्रत्यगात्मन्यखिलविधिमनोगोचरेब्र-ह्मणीशे॥९९॥

इदानीं ज्ञानिनि बाधिताहंकारादिजगत्प्रतीतावपि बंध-कत्वं कर्मणां न भवतीत्यस्मिन्नर्थे “ भिद्यते हृदयग्रंथि-रित्यादिकांश्रुतिं” प्रमाणयति—क्षीयंतइति । तस्मिन्सर्व-वेदांतोक्तलक्षणलक्षिते तान्येव लक्षणान्याह । विशेषणैः चिन्मात्ररूपे चैत्यरहितचिन्मात्रे तत्र हेतुः गुणमलरहिते गुणकृतारागद्वेषादयः गुणरूपाश्च मलाः बंधनलेपहेतव-स्तैःरहिते हीने । तत्वमस्यादिलक्ष्ये तत्वमस्यादिमहावा-क्यैर्भागत्यागलक्षणयैव केवलं लक्षितुं योग्ये ब्रह्मणि अपरिच्छिन्ने ईशे तं विना मायातत्कार्ययोरनिर्वाहा-न्नियंतृत्वाद्युपचरिते अखिलविधिमनोगोचरे समस्तवि-धिवाक्यानामनियोज्यविषये च मनसां चाविषये कूट-स्थे निर्विकारे प्रत्यगात्मनि अंतर्मुखवृत्त्यैवाज्ञानमात्रनि-रसने जाते स्वयमेव प्रकाशमाने आत्मनि वस्तुनि स्वस्मिन् परेशे परेषां ब्रह्मादीनां मायायाश्च नियंतृत्वोपचारिते तमात्मानं विना तेषां तत्कार्याणां चासिद्धेः दृष्टमात्रे

केवलमनुभूतएव अस्य कूटस्थब्रह्मरूपभूतांतःकरणवृत्तिमतः कर्माणि संचितप्रारब्धक्रियमाणाख्यानि सर्वाण्यपिक्षीयंते नष्टानि भवंति तत्र हेतुमाह खल्विति। अस्येत्यनुवृत्त्या कूटस्थब्रह्मसाक्षात्कारवतः पुरुषस्य हृदयग्रंथिः हृदंतःकरणं तस्य यः प्रकाशकः आत्मातयोर्ग्रंथिः स्वात्माज्ञानरूपं अन्योन्यतादात्म्यरूपेणैक्यरूपः संश्लेषः सः निश्चयेन खलु उद्भिद्यते तयोरंतःकरणचिदात्मनोर्भेदप्रतीत्या छिन्नोभवति तल्लिंगमाह छिद्यंतइति। सर्वसंशयाः देहादात्माभिन्नोवाऽभिन्नइत्यादयः अज्ञानग्रंथिमूलत्वात्तेषां तन्निवृत्तौ ते छिद्यंते नश्यंति तत्फलं चाह। विशेषेण न जनिमृतिफलदाइति जन्ममरणफलप्रदाः अतस्तन्निवृत्तौ जन्ममरणनिवृत्तिर्ब्रह्मज्ञानफलमित्यर्थः॥ ९९॥

आदौमध्येतथांतेजनिमृतिफलदंकर्ममूलंविशालंज्ञात्वासंसारवृक्षंभ्रममदमुदिताशोकतानेकपत्रम्॥ कामक्रोधादिशाखंसुतपशुवनिताकन्यकापक्षिसंघं छित्वासंगासिनैनंपटुमतिरभितश्चिंतयेद्वासुदेवम्॥ १००॥

इदानीमेतादृशज्ञानिनोब्रह्मात्मसाक्षात्कारवृत्तेः वासना-
जननपर्यंतं दृढीकरणाय ध्यानं तत्पूर्वावश्यकर्तव्यस-
हितमाह— आदाविति । आदौ उत्पतेः प्राक् तथांते
नाशानंतरं मध्ये प्रतीतिकाले असन्नपि जनिमृतिफलदं
जनिर्जन्ममृतिर्मरणं तएव फले प्रसवे तयोर्दातारं । कर्म-
मूलं कर्म क्रिया सा मूलं यस्य विशालं महांतं भ्रमोविप-
रीतज्ञानं मदः स्वश्रैष्ठ्यज्ञानं मुदिता हर्षवृत्तिः शोकः खेद
वृतिः इत्यादीनि अनेकानि अनंतानि पत्राणि पर्णा-
नि इव यस्यकामक्रोधादिशाखं कामः प्रियविष-
यिणीच्छा क्रोधः तत्प्रतिबंधके रोषवृत्तिः आदिपदेन
लोभादिवृत्तयस्ताएव शाखाइव यस्य सुतपशुवनिता-
कन्यकापक्षिसंघं सुताः पुत्रा पशवः गोवृषादयः व-
निताः स्त्रियः कन्यकाः दुहितरः ते पक्षिणः पतत्रिण-
स्तेषां संगोयस्मिन् संसारवृक्षं संसरणस्वभावं वृश्चनी-
यत्वाद्वृक्षं " उर्ध्वमूलोऽवाक्शाखइत्यादिश्रुतेः"। "ऊर्ध्व-
मूलमधःशाखमित्यादिस्मृतेश्च " अश्वत्थापरपर्यायं ज्ञा-
त्वा असत्वेन प्रतीय अनुभूयेत्यर्थः। ततएनंउक्तलक्ष-
णं संसारवृक्षं पटुमतिः कुशला पट्वी मतिः मननंवर्ती
वृत्तिर्यस्य सपुमान् असंगासिना स्वासंगत्वानुभवएवा-
सिः खड्गःतेन छित्वा विनाश्य अभितः सर्वदा वासुदेवं

वा विकल्पेन असूनां प्राणेंद्रियादीनां देवः प्रकाशकः आत्मा तं चिंतयेत् अनुभवेत्प्राणादीनां सत्वासत्वेन प्रकाशकेन त्वयि विकल्पइति भावः ॥ १०० ॥

जातंमय्येवसर्वंपुनरपिमयितत्संस्थितं चैवविश्वंसर्वंमय्येवयातिप्रविलयमिति तद्ब्रह्मचैवाहमस्मि ॥ यस्यस्मृत्याचयज्ञाद्यखिलशुभविधौसुप्रयातीहकार्यंन्यूनंसंपूर्णतांवैतमहमतिमुदैवाच्युतंसन्नतोस्मि ॥ १०१ ॥

इदानीं सर्वोत्पत्तिस्थितिलयाधारत्वेन स्वस्मिन्ब्रह्मत्वानुसंधानपूर्वकं स्वात्मज्ञानस्यैवाखिलकर्मसमाप्तित्वं द्योतयन्नात्मानं नमस्करोति— जातमिति । सर्वं समस्तं द्वैतजातं मय्येव ब्रह्माभिन्नकूटस्थात्मसहिते ज्ञाते ब्रह्मात्मनि एवकारेणान्यः कोपि आधारोनास्तीति सूचितं जातं आविर्भूतं पुनरपि पश्चादुत्पत्त्यनंतरमपि । तत्समस्तं विश्वं जगत् मयि शबलेब्रह्मात्मनि संस्थितं सम्यक् स्थितिं प्राप्तं । किंच तत्सर्वं समस्तं जगत् । मय्येव शबले ब्रह्मण्येव प्रविलयं निद्राप्रलयसमये सबीजं शुद्धे मयि च ज्ञाने-

न अत्यंतनाशं तिरोधानमित्यर्थः। याति प्राप्नोति इत्य
तोहेतोः तत् "यतोवाइमानिभूतानिजायंतइत्यादिक
या तद्ब्रह्मेतीत्यंतया" श्रुत्योत्पत्तिस्थितिलयाधारवत्वोप
लक्षितोपादानत्वेन निर्दिष्टं ब्रह्म देशकालवस्तुकृत-
परिच्छेदरहितं वस्तु अहं अहंपदलक्षितः कूटस्थ
प्रत्यगात्मा अस्मि भवामि च पुनः यस्य ब्रह्माभि
न्नप्रत्यगात्मनः स्मृत्या अनुसंधानेन यज्ञाद्यखिलशु
भविधौ यज्ञोश्वमेधादिर्यस्य वाजपेयादेस्तादृशे सम-
स्तशुभकर्मणि विधाने कार्यकर्तव्यविधिः न्यूनं मं-
त्रतंत्रादिभिर्न्यूनमपि वै निश्चयेन संपूर्णतां समाप्ति-
फलप्रदत्वमित्यर्थः सुप्रयाति प्राप्नोति अहं ब्रह्माभि-
न्नकूटस्थात्मसाक्षात्कारवान् अतिमुदैव अत्यंतमानंद-
साक्षात्कारवृत्त्यैव केवलं तं ब्रह्माभिन्नं प्रत्यगात्मानं
अच्युतं अच्युतस्वभावं सन्नतः अष्टांगभूताष्टप्रकृति-
सहितस्तत्रलीनः अस्मि भवामि ॥ १०१ ॥ ॥ इति-
श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पूज्य-
पादकृतशतश्लोकीभाष्यमानंदगिरिकृतंसमाप्तम् ॥ ७ ॥

---

समाप्तेयंशतश्लोकी